भाषा—सिंह का रवि, कर्क का चन्द्रमा, मेष और वृश्चिक का मङ्गल, मिथुन और कन्याका बुध, मीन और धनुका बृहस्पति, वृष और तुलाका शुक्र, मकर और कुम्भका शनि स्वामी होता है।

अब यहाँ शंका होती है कि रवि और चन्द्रमा ग्रहों में प्रधान होकर भी एक २ राशि के स्वामी हुए, पर अन्य ग्रह अप्रधान होकर भी दो दो राशियों के स्वामी क्यों हुए।

अत्र युक्तिः—

कण्ठीरवं विक्रमिणं विलोक्य स्वीयं पदं तत्र चकार सूर्यः ।
मैत्र्या तदासन्नतया कुलीरे निजं बबन्धालयमेणलक्ष्मा ॥
अन्ये ग्रहा गृहयियाचिषया क्रमेण शीतांशुतिग्ममहसोः सधनं समीयुः ।
प्राप्तक्रमेण ददतुर्भवनानि तौ तु ताराग्रहाद्विभवनास्तत एव जाताः ॥

अथ राशिसंज्ञां दिग्विभागञ्चाह—

पुंस्त्री क्रूराऽक्रूरौ चरस्थिरद्विस्वभावसंज्ञाश्च ।
अजवृषमिथुनकुलीराः पञ्चमनवमैः सहेन्द्राद्याः ॥

भाषा—मेष आदि राशियों की पुरुष स्त्री, क्रूर अक्रूर, चर स्थिर द्विस्वभाव क्रमशः संज्ञा होती है।

यथा मेष की पुरुष वृष की स्त्री मिथुन की पुरुष कर्क की स्त्री इत्यादि। तथा मेष की क्रूर वृष की अक्रूर मिथुन की क्रूर कर्क की अक्रूर इत्यादि। एवं मेष की चर वृष की स्थिर मिथुन की द्विस्वभाव कर्क की चर सिंह की स्थिर कन्या की द्विस्वभाव इत्यादि संज्ञा होती है।

मेष वृष मिथुन कर्क ये राशियाँ अपने पाचव और नववें राशि के साथ पूर्वादि दिशाओं के स्वामी होते हैं। अर्थात् मेष सिंह धनु पूर्वदिशा का वृष कन्या मकर दक्षिण दिशा का मिथुन तुला कुम्भ पश्चिम दिशा का और कर्क वृश्चिक मीन उत्तर दिशा का स्वामी हैं।

अथ मीनादीनां सलिलादिविशेषसंज्ञामाह—

मीनालिकर्कटमृगाः सलिलाभिधानाः तोयाश्रया घटवधूयुगगोपसंज्ञाः ।
निस्तोयभूतलचराः क्रियचापतौलिकण्ठीरवाश्च बहवः प्रवदन्ति सन्तः ॥

स्फुटार्थं राशीनां संज्ञाचक्रम् ।

| मेष | वृष | मिथुन | कर्क | सिंह | कन्या | तुल | वृश्चिक | धनु | मकर | कुम्भ | मीन |
|---|---|---|---|---|---|---|---|---|---|---|---|
| क्रूर | सौम्य | क्रूर | सौम्य | क्रूर | सौम्य | क्रूर | सौम्य | क्रूर | सौम्य | क्रूर | सौम्य |
| पुरुष | स्त्री | पुरुष | स्त्री | पुरुष | स्त्री | पुरुष | स्त्री | पुरुष | स्त्री | पुरुष | स्त्री |
| चर | स्थिर | द्विस्व. | चर | स्थिर | द्विस्व. | चर | स्थिर | द्विस्व. | चर | स्थिर | द्विस्व. |
| पृष्ठो. | पृष्ठो | शीर्षो. | पृष्ठो. | शीर्षो. | शीर्षो. | शीर्षो. | शीर्षो. | पृष्ठो. | पृष्ठो. | शीर्षो. | उभयो |
| रात्रि. | रात्रि | रात्रि. | रात्रि. | दिन | दिन | दिन | दिन | रात्रि. | रात्रि. | दिन. | रात्रि |
| क्षत्री. | ब्राह्म. | वैश्य | शूद्र | क्षत्री. | शूद्र | वैश्य | ब्राह्म. | क्षत्री. | शूद्र | वैश्य | ब्राह्म. |
| अग्नि | पृथ्वी | वायु | जल | अग्नि | पृथ्वी | वायु | जल. | अग्नि | पृथ्वी | वायु | जल |
| निर्ज. | जला. | जला. | कीट | निर्ज. | जला. | निर्ज. | कीट | निर्ज. | वन | जला. | जल. |
| खनिज | उद्भिज | प्राणिज | खनिज | उद्भिज | प्राणिज | खनिज | उद्भिज | प्राणिज | खनिज | उद्भिज | प्राणिज |

अथ प्रसङ्गात्सूर्यादिभ्यः फलविशेषचिन्तामाह—

सूर्यादात्मपितृप्रभावनिरुजाशक्तिश्रियश्चिन्तयेत्
चेतोबुद्धिनृपप्रसादजननीसम्पत्करश्चन्द्रमाः ।
सत्त्वं रोगगुणानुजावनिसुतज्ञातीर्धरासूनुना
विद्याबन्धुविवेकमातुलसुहृद्वाक्कर्म इन्दुबोधनः ॥
प्रज्ञानित्यशरीरपुष्टितनयज्ञानानि वागीश्वरात्
पत्नीवाहनभूषणानि मदनव्यापारसौख्यं भृगोः ।

आयुर्जीवनमृत्युकारणविपत्सम्पत्प्रदाता शनिः
सर्पेणैव पितामहं तु शिखिना मातामहं चिन्तयेत् ॥

अथ रव्यादीनां स्थिरत्वादिमाह—

रविः स्थिरः शीतकरश्चरः स्यादुग्रः कुजश्चन्द्रसुतस्तु मिश्रः ।
मृदुः सुरेज्यो भृगुजोलघुश्च शनिः सुतीक्ष्णः कथितो मुनीन्द्रैः ॥
क्रमाच्च रागद्विशरीरभानासुपान्त्यधर्मस्मरगास्तदीशाः ।
खरेशमादिस्थितराशिनाथावतीव बाधाकरखेचराः स्युः ॥

ततो ग्रहाणां कारकमाह—

द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ गुरुरिनतनयारौ भार्गवोभानुपुत्रः ।
दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः सुरगुरुरिनसूनुः कारकाः स्युर्विलग्नात् ॥

स्थानविशेषे शुभाशुभफलमाह—

कामावनीनन्दनराशियाताः सितेन्दुपुत्रामरवन्द्यमानाः ।
अरिष्टदास्तेऽखिलजातकेषु सदाष्टमस्थः शनिरिष्टदः स्यात् ॥

अथेतरग्रहयोगे ग्रहाणां विशेषफलदायित्वमाह—

अर्केण मन्दः शनिना महीसुतः कुजेन जीवो गुरुणा निशाकरः ।
सोमेन शुक्रोऽसुरमन्त्रिणा बुधो बुधेन चन्द्रः खलु वर्द्धते सदा ॥

भाषा—सूर्य से शनि, शनि से मङ्गल, मङ्गल से बृहस्पति, बृहस्पति से चन्द्रमा चन्द्रमा से शुक्र, शुक्र से बुध, और बुध से चन्द्रमा बढ़ते हैं। अर्थात् सूर्य से शनि का दोष नाश होता है। इसी तरह सब ग्रह एक दूसरे के दोष को नाश करते हैं।

अथ दोषापहरणमाह—

राहुदोषं बुधो हन्यादुभयोस्तु शनैश्चरः । त्रयाणां भूमिजो हन्ति चतुर्णां दानवार्चितः॥
पञ्चानां देवमन्त्री च षण्णां दोषं तु चन्द्रमाः । सप्तदोषं रविर्हन्याद्विशेषादुत्तरायने ॥

भाषा—राहुजन्य जो कुछ दोष होता है उसको बुध नाश करता है।

राहु और बुध इन दोनों के दोष को शनि नाश करता है।

राहु, बुध, और शनि इन तीनों के दोष को मङ्गल नाश करता है।

राहु, बुध, शनि, मङ्गल और शुक्र इन पांचों के दोष का गुरु नाश करता है।

राहु, बुध, शनि, मङ्गल, शुक्र और गुरु इन छ ग्रहों के दोष को चन्द्रमा नाश करता है।

राहु, बुध, शनि, मङ्गल, शुक्र, गुरु और चन्द्रमा इन सात ग्रहों के दोष को विशेष कर उत्तरायण में रवि नाश करता है।

स्थानविशेषे स्थितिक्रमविशेषे ग्रहाणां विफलत्वमाह—

सभानुरिन्दुः शशिनश्चतुर्थो गुरुः सुते भूमिसुतः कुटुम्बे।
भृगुः सपत्ने रविजः कलत्रे विलग्नतस्ते विफला भवन्ति॥

भाषा—रवि से युत चन्द्र निष्फल होता है। बुध लग्न से चतुर्थ स्थान में, गुरु पञ्चम में, मङ्गल दूसरे में, शुक्र छठे में, शनि सप्तम स्थान में विफल होता है। अर्थात् कुछ फल नहीं देता है।

अथ ग्रहाणां स्वरूपमाह—

भानुर्युगात्प्राङ्कितदेहरक्तश्यामान्वितः पिङ्गलनेत्रकान्तिः।
पित्तात्मकोऽयं समगात्रयष्टिः प्रतापयुक् सत्त्वगुणोऽल्परोमा॥

सञ्चारयुक् सङ्कुचितार्थवाक्यः स्वल्पप्रदो दैविकबुद्धियुक्तः।
चन्द्रः सितांगः समगात्रयष्टिर्वाग्मी परिश्रयङ्गविवेकयुक्तः॥

क्वचित्कृशः शीतलवाक्ययुक्तः सत्त्वाश्रयो वातकफानिलात्मा।
कोपाग्निनेत्रः सितरक्तगात्रः पित्तात्मकश्चञ्चलबुद्धियुक्तः॥

कृशाङ्गयुक्तामसबुद्धियुक्तो भौमः प्रतापी रतिकेलिलोलः।
दूर्वादलाभः शशिजोऽतिविद्वान् रजोगुणः सूनृतवाक्यजालः॥

हास्यप्रियः पित्तकफानिलात्मा सद्यः प्रतापी ननु पुंश्चलश्च।
बृहस्पतिस्तुन्दिलगात्रयष्टिः कफात्मकः श्रेष्ठमतिः सुविद्वान्॥

सत्त्वाश्रयः सर्वगुणाभिरामः पिङ्गाक्षमूर्द्धन्यकचाभिरामः।
सुलोचनश्चास्फुजिदात्तकामः सुखी बली सुन्दरकान्तिपूर्णः॥

आनीलवर्णाङ्कितरोमयुक्तो रजोगुणः सर्वगुणाभिरामः।
जाल्मस्तु मन्दः कृशदीर्घगात्रः पिङ्गेक्षणः क्रूरकथाभिरामः॥

स्थूलद्विजस्तामसबुद्धियुक्तो वातात्मको वाक्कठिनस्तु निन्द्यः।
बलेन निश्चित्य वदेद्ग्रहाणां तत्प्राश्निके जन्मनि तद्गुणांस्तु॥

भाषा—सूर्य—चतुरस्रशरीर, रक्तश्यामवर्ण, नेत्रकान्ति पीतवर्ण पित्तात्मक, समान शरीर, प्रतापी, सत्त्वगुणवान्, अल्पकेश, घूमनेवाला, वाक्य का अर्थ संकोच युक्त थोड़ा देने वाला और दैवी बुद्धि युक्त है।

चन्द्रमा-श्वेतवर्ण, समशरीर, बोलने में चतुर, गोलाकार अङ्ग, विवेकी, कहीं कृश कहीं स्थूल, ठंढे वाक्य बोलने वाला, सत्त्वगुणी, कफवायुप्रकृति।

मङ्गल—कोप से रक्तनेत्र, श्वेतरक्त ( पाटल ) रङ्ग, पित्तात्मक, चञ्चलबुद्धियुक्त, कृश, तामसबुद्धियुक्त, प्रतापी, और काम के लिये अति चञ्चल।

बुध-दूर्वा श्याम, अतिविद्वान्, रजोगुणी, सत्यवादी, हास्यप्रिय, पित्त कफ वायुप्रकृति, तत्काल प्रताप वाला और व्यभिचारी।

बृहस्पति-बड़ा पेट वाला, कफात्मक, श्रेष्ठबुद्धिवाला, अच्छा विद्वान्, सत्वगुणी, सम्पूर्ण गुणों को जानने वाला, शिर केश और नेत्र पीले और प्रसन्न।

शुक्र-सुन्दरनेत्रवाला, पूर्णकाम, सुखी, बलवान्, सुन्दरकान्ति, समृद्धिपूर्ण, नीलरङ्ग से चिह्नित, बहुत रोम, रजोगुणी, सम्पूर्ण गुण जानने वाला।

शनि-दुष्टस्वभाव, झूठफरेब वाला, कृश, लम्बाशरीर, पीले नेत्र वाला, क्रूरस्वभाव, कुटिलकेश से सुन्दर, मोटे दांत वाला, तामसबुद्धि युक्त, वातात्मक, कठोरवाणी बोलने वाला, निन्दा के योग्य।

ग्रहों के बल का निश्चय करके जो बलाधिक ग्रह हो उसके गुण को प्रश्न और जन्म में कहना चाहिए।

अथ ग्रहाणां पीडाकरणप्रकारमाह—

सदाग्निरोगज्वरवृद्धिदीपनक्षयातिसारादिकरोगसङ्कुलैः।
नृपालदेवावनिदेवकिंकरैः करोति चित्तव्यसनं दिवाकरः॥
पाण्डुदोषजलदोषकामला पीनसादिरमणीकृतामयैः।
कालिकासुरस्रवासिनीगणैराकुलं च कुरुते तु चन्द्रमाः॥
पित्तवातकफशस्त्रपावकग्रन्थिरुग्व्रणदरिद्रजामयैः।
वीरशैवगणभैरवादिभिर्भीतिमाशु कुरुते धरासुतः॥
गुह्योदरादश्यशमीरकुष्ठमन्दाग्निशूलग्रहणीरुगाद्यैः।
बुधादिविष्णुप्रियदासभूतैरतीव दुःखं शशिजः करोति॥
आचार्यदेवगुरुभूसुरशापदोषैः शोकं च गुल्मरुजमिन्द्रगुरुः करोति।
कान्ताविकारजनिमेहरुगासुराद्यैः स्वेष्टाङ्गनाजनकृतैर्भयमासुरेज्यः॥
दारिद्र्यदोषनिजकर्मपिशाचचौरैः क्लेशं करोति रविजः सह सन्धिरोगैः।
कण्डूवसूरिरिपुकृत्रिमकर्मरोगैः साचारहीनलघुजातिगणैश्च केतुः॥
करोत्यपस्मारवसूरिरुग्क्षुद्रुहक्रामप्रेतपिशाचभूतैः।
उद्बन्धनेनार्चिकुष्ठरोगैर्विधुन्तुदश्चातिभयं नराणाम्॥
आद्यन्तमध्यभवनोपगता नभोगाश्चादित्यभूमितनयौ शनिशीतरश्मी।
जीवासुरेन्द्रसचिवौ फलदाः क्रमेण शुभ्रांशुजः सकलकालफलप्रदः स्यात्।

अथैतच्छास्त्रे दृष्टौ विशेषमाह—

पश्यन्ति सप्तमं सर्वे शनिजीवकुजाः पुनः।
विशेषतश्च त्रिदशत्रिकोणचतुरष्टमान् ॥ ५ ॥

अ०—सर्वे सप्तमं पश्यन्ति, पुनः शनिजीवकुजाः त्रिदशत्रिकोण चतुरष्टमान् विशेषतः पश्यन्ति ॥ ५ ॥

सु०—पश्यन्तीति। सर्वे रव्यादयो ग्रहाः, सप्तमं पश्यन्ति स्वाधिष्ठित-स्थानात् सप्तमं स्थानं तत्रस्थं खेटं चावलोकयन्ति, पुनः शनिजीवकुजाः सौरिगुरु-भौमाः, क्रमेण क्रमशश्च, त्रिदशत्रिकोणचतुरष्टमान् पश्यन्ति। तद्यथा शनिस्त्रिदशं तृतीयं दशमं पूर्णदृशा पश्यति। जीवः त्रिकोणं पञ्चमं नवमं पूर्णदृशावलोकयति। कुजश्चतुर्थाष्टमं पूर्णदृशा पश्यति।

नन्वयं विशेषतः संज्ञां ब्रूम इति महत्यारभट्या को विशेषोऽभिहितः, सर्वजातकपुस्तकेष्वीदृश्या एव दृष्टेरुक्तत्वात् सामान्यशास्त्रादेव तज्ज्ञानं शक्यमिति चेन्न। अन्यजातकपुस्तकेषु पादार्धपादोनादिदृष्टेरुक्तत्वादत्र केवलं पूर्णदृष्टेरेव ग्रहणात् तद्वैलक्षण्येन विशेषावबोधनात्तज्ज्ञानस्य सामान्यशास्त्रतोऽनभ्युपगमात्।

अथ पूर्वैरेतेषां ग्रहाणां पूर्णावलोकने विशेषत्वे कारणं कल्पितम्, यथा स्व-स्थानात्सप्तमस्थानं जायास्थानं तद्रक्षणं सर्वेषामावश्यकम्। उक्तञ्च—

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति ॥

अतः सर्वे ग्रहाः सप्तमस्थानं पूर्णदृशा पश्यन्ति, एवञ्च तृतीयं पराक्रमस्थानं दशमं राज्यस्थानञ्चास्ति, अनयो रक्षणं भृत्यकार्यं मुख्यम् अतो भृत्यग्रहः शनि-स्तृतीयं दशमं च पूर्णदृशा पश्यति।

पञ्चमं विद्यास्थानं नवमं धर्मस्थानं विद्याशिक्षणं धर्मशिक्षणं च गुरोर्मुख्यं कर्म तेन गुरुः नवमं च पूर्णदृशावलोकयति।

चतुर्थं सुखस्थानं अष्टमं आयुस्थानम् अनयोः परिरक्षणं सेनानायकस्य मुख्यं कर्म, अतः सेनानायको भौमः चतुरष्टमं पूर्णदृशावलोकयति ॥ ५ ॥

भाषा—सूर्यादिसमस्तग्रह सप्तमस्थान को पूर्णदृष्टि से देखते हैं। फिर विशेष करके क्रमसे तृतीय दशम को शनि, नवम पञ्चम को बृहस्पति, और चतुर्थ अष्टम भवन को मङ्गल पूर्णदृष्टि से देखते हैं। इस ग्रन्थ में पूर्णदृष्टि ही प्रधान है पाद दृष्टि नहीं ॥५॥

अत्र वराहमिहिर एवमाह—

पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः।
चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च॥ स्पष्टम्।

तत्रैव सामान्यमाह—

दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च।
पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति॥

भाषा—ग्रह जहां पर स्थित रहता है, वहां से दशम और तृतीय स्थानको एक चरण की दृष्टि से, नवम और पञ्चमस्थान को दो चरण की दृष्टि से चतुर्थ और अष्टम गृहको तीन चरण की दृष्टि से और सप्तमस्थान को पूर्ण दृष्टि से देखता है। और फल भी इसी तरह देता है। अर्थात् जो ग्रह एकचरण की दृष्टि से देखता है वह चतुर्थांश फल को देता है। जो दो चरण की दृष्टि से देखता है वह आधा फल देता है। जो तीन चरण की दृष्टि से देखता है वह पादोन फल देता है। जो पूर्ण दृष्टि से देखता है वह पूर्ण फल देता है।

एवमन्यत्राप्याह—

पादेक्षणं भवति सोदरमानराश्योरर्धं त्रिकोणयुगलेऽखिलखेचराणाम्।
पादोनदृष्टिनिचयश्चतुरस्रयुग्मे सम्पूर्णदृग्बलमनङ्गगृहे वदन्ति॥ स्पष्टम्।

तत्र विशेषः—

शनिरतिबलशाली पाददृग्वीर्ययोगे सुरकुलपतिमन्त्री कोणदृष्टौ शुभः स्यात्।
त्रितयचरणदृष्ट्या भूकुमारः समर्थः सकलगगनवासाः सप्तमे दृग्बलाढ्याः॥

अथ ग्रहाणामूर्ध्वदृष्ट्यादिमाह—

अथोर्ध्वदृष्टी दिननाथभौमौ दृष्टिः कटाक्षेण कवीन्दुसुन्वोः।
शशांकगुर्वोः समभागदृष्टिरधोक्षिपातस्त्वहिनाथशन्योः॥

अथ तात्कालिकशुभाशुभत्वविचारे त्रिकोणाधिपतीनां शुभत्वं त्रिषडायाधिपतीनामशुभत्वं चाह—

**सर्वे त्रिकोणनेतारो ग्रहाः शुभफलप्रदाः।**
**पतयस्त्रिषडायानां यदि पापफलप्रदाः॥ ६॥**

अ०—त्रिकोणनेतारः सर्वे ग्रहाः शुभफलप्रदाः भवन्ति। यदि त्रिषडायानां पतयस्तदा पापफलप्रदाः भवन्ति॥ ६॥

सु०—सर्व इति। त्रिकोणनेतारःपञ्चमनवमाधीशाः, सर्वे ग्रहाः शुभा अशुभाश्च, शुभफलप्रदा भवन्ति। ग्रहा इत्यनेनैव सिद्धे शुभपापग्रहभेदेन फलस्य पुरतो वक्ष्यमाणत्वादत्र सर्वं इति। तेन सर्वे स्वभावतः शुभाः पापाश्च ग्रहास्त्रिकोणस्वामिनश्चेत् शुभफलप्रदा भवन्तीति फलितोऽर्थः।

यदि त्रिषड़ायानां तृतीयषष्ठैकादशानां पतयः स्युस्तदा पापफलप्रदा भवन्ति। एतेन त्रिकोणं शुभस्थानमशुभञ्च त्रिषडायस्थानमिति ॥ ६ ॥

भाषा—त्रिकोण ( ९, ५ ) के स्वामी शुभफलदायक होते हैं। और त्रिषडाय (३, ६, ११) भवनों के स्वामी अशुभफल देते हैं। अर्थात् त्रिकोण शुभ स्थान है, और त्रिषडाय अशुभ स्थान है ॥ ६ ॥

अथापरं विशेषमाह—

**न दिशन्ति शुभं नृणां सौम्याः केन्द्राधिपा यदि।**
**क्रूराश्चेदशुभं ह्येते प्रबलाश्चोत्तरोत्तरम् ॥ ७ ॥**

अ०—सौम्याः यदि केन्द्राधिपाः तर्हि नृणां शुभं न दिशन्ति। चेत् क्रूरा केन्द्राधिपाः तर्हि अशुभं न दिशन्ति। हि एते उत्तरोत्तरं प्रबलाः॥७॥

सु०—न दिशन्तीति। सौम्याः स्वाभाविकशुभग्रहाः पूर्णचन्द्रबुधगुरुशुक्राः, यदि चेत्, केन्द्राधिपाः लग्नचतुर्थसप्तमदशमराशिपतयः स्युस्तदा नृणां मनुष्याणां, शुभं शुभफलं, न दिशन्ति न प्रयच्छन्ति। शुभग्रहा अपि केन्द्राधिपतित्वेन निमित्तेन अशुभफलमेवदिशन्तीत्यर्थः। चेद्यदि क्रूराः स्वाभाविकपापग्रहाः सूर्यभौमशनयः, केन्द्राधिपाः केन्द्रपतयस्युस्तदा अशुभम् अशुभफलं न दिशन्ति। अशुभग्रहा अपि केन्द्राधिपतित्वेन निमित्तेन शुभं दिशन्तीत्यर्थः। अथैषां बलाबलमाह, हि निश्चयेन एते त्रिकोणपतयस्त्रिषडायपतयः केन्द्रपतयश्च उत्तरोत्तरं प्रबलाः बलवन्तो भवन्ति। अर्थात् पञ्चमेशान्नवमेशः प्रबलः, तथा तृतीयेशात् षष्ठेशः प्रबलः, षष्ठेशादेकादशेशश्च, एवं लग्नेशाच्चतुर्थेशश्चतुर्थेशात्सप्तमेशः सप्तमेशाद्दशमेशः प्रबल इति। अत्रैतदुक्तं भवति यो ग्रह उक्तरीत्या बलवांस्तस्यैव फलं वाच्यं नान्यस्येति ॥ ७ ॥

भाषा—जो शुभग्रह पूर्णचन्द्र बुध बृहस्पति और शुक्र केन्द्र ( १।४।७।१० ) भवनों के अधिपति हों तो मनुष्यों को शुभ फल नहीं देते हैं। और यदि क्रूर ग्रह-सूर्य मङ्गल और शनि केन्द्रभवनों के स्वामी हों तो अशुभ फल नहीं देते हैं, अर्थात् शुभग्रह के समान फल देते हैं ये उत्तरोत्तर क्रम से बली हैं। जैसे पञ्चमेश से नव-

मेश बली है। और तृतीयेश से षष्ठेश षष्ठेश से एकादशेश बली है। और लग्नेश से चतुर्थेश, चतुर्थेश से सप्तमेश, सप्तमेश से दशमेश बली है। इस तरह जो ग्रह बलवान् हो उसी का फल कहना ॥ ७ ॥

अथ सम्बन्धवशाद्ग्रहाणां शुभाशुभफलप्रदत्वमाह—

लग्नाद्व्ययद्वितीयेशौ परेषां साहचर्य्यतः।
स्थानान्तरानुगुण्येन भवतः फलदायकौ ॥ ८ ॥

अ०—लग्नात् व्ययद्वितीयेशौ परेषां साहचर्य्यतः स्थानान्तरानुगुण्येन फलदायकौ भवतः ॥ ८ ॥

सु०—लग्नाद्व्ययेति। लग्नात् जन्मलग्नात्, व्ययद्वितीयेशौ द्वादशद्वितीयराशिस्वामिनौ, परेषां अन्येषां ग्रहाणां, साहचर्य्यतः सहचरस्य भावः साहचर्य्यं तस्मात् साहचर्य्यतः सहावस्थानात्, तथा स्थानान्तरानुगुण्येन अन्यत्स्थानं स्थानान्तरं तस्यानुगुण्यं सादृश्य तेन फलदायकौ भवतः। अत्रैतदुक्तं भवति-शुभग्रहसाहचर्य्ये सति द्वितीयद्वादशेशयोः शुभफलत्वं अशुभग्रहसाहचर्य्ये चाशुभफलप्रदत्वमिति। इदं शुभाशुभफलप्रदत्वं यस्मिन्भावे तावुभौ तिष्ठतस्तद्भावद्वारैव ददत इत्याह—स्थानान्तरानुगुण्येनेति। मित्रादि स्थानस्थत्वेमित्रादिद्वारा शुभफलप्रदत्वं शत्रुभावस्थत्वे शत्रुद्वारैवाशुभफलप्रदत्वमित्यर्थः ॥ ८ ॥

भाषा—लग्नसे द्वादशेश और द्वितीयेश अन्यग्रहों के साहचर्य्य से जिस स्थान में बैठे हों उस स्थान के अनुसार फल देते हैं। जैसे मित्र गृह में बैठे हों तो मित्र द्वारा शत्रु भवन में बैठे हों तो शत्रु द्वारा शुभाशुभ फल को देते हैं ॥ ८ ॥

अथाष्टमेशस्य शुभाशुभत्वमाह—

भाग्यव्ययाधिपत्येन रन्ध्रेशो न शुभप्रदः।
स एव शुभसन्धाता लग्नाधीशोऽपि चेत्स्वयम् ॥ ९ ॥

अ०—भाग्यव्ययाधिपत्येन रन्ध्रेशः शुभप्रदो न भवति, स एव स्वयं लग्नाधीशः अपि चेत् तदा शुभसन्धाता भवति ॥ ९ ॥

सु०—भाग्यव्ययाधिपत्येनेति। भाग्यव्ययाधिपत्येन भाग्यान्नवमाद्व्ययो द्वादशः अर्थादष्टमस्थानं तस्य आधिपत्यं स्वामित्वं तेन हेतुना रन्ध्रेशोऽष्टमभवनाधीशः शुभप्रदो न भवति। स एव अष्टमेश एव स्वयं, लग्नाधीशो लग्नस्वामी, अपि निश्चयेन, चेद्यदि तदा शुभसंधाता शुभस्यैव कारको भवतीति ॥ ९ ॥

भाषा—भाग्यस्थान से द्वादशस्थान के स्वामी होने के कारण अष्टमेश शुभ फल को नहीं देता है । पर वही अष्टमेश यदि लग्न का स्वामी हो तो शुभ फल को देता है ॥ ९ ॥

अथ केन्द्रेशत्वमशुभं सौम्यग्रहाणामुक्तं तत्र गुरुशुक्रयोर्विशेषमाह—

केन्द्राधिपत्यदोषस्तु बलवान् गुरुशुक्रयोः ।
मारकत्वेऽपि च तयोर्मारकस्थानसंस्थितिः ॥ १० ॥

अ०—गुरुशुक्रयोः केन्द्राधिपत्यदोषः तु बलवान्, अपि च तयोः मारकस्थानसंस्थितिः मारकत्वे बलवती ॥ १० ॥

सु०—केन्द्राधिपत्येति । गुरुशुक्रयोः केन्द्राधिपत्यदोषः लग्नचतुर्थसप्तमदशमेशत्वप्रयुक्तो दोषः ( न दिशन्ति शुभं नृणामित्यादिना प्रतिपादितदोषः ) बलवान् बलिष्ठो भवति । अत्र विशेषमाह—अपि निश्चयेन च, तयोः पूर्वोक्तयोः गुरुशुक्रयोः, मारकस्थानसंस्थितिः लग्नात्सप्तमद्वितीयस्थानसंस्थितिः "द्वितीयं सप्तमस्थानं मारकस्थानमुच्यत इति" मारकत्वे बलवती भवति । अर्थादन्यापेक्षया तौ बलवन्तौ मारकग्रहाविति ॥ १० ॥

भाषा—बृहस्पति और शुक्र का केन्द्रा ( १।४।७।१० ) धिपत्यजन्यदोष प्रबल है । यहां विशेष यह है कि अगर केन्द्रस्वामी होकर गुरु, शुक्र मारकस्थान ( २।७ ) में पड़े तो दूसरों की अपेक्षा से प्रबल मारकेश होते हैं ॥ १० ॥

अथ सूर्यचन्द्रयोरष्टमेशत्वदोषे विशेषमाह—

बुधस्तदनु चन्द्रोऽपि भवेत्तदनु तद्विधः ।
न रन्ध्रेशत्वदोषस्तु सूर्याचन्द्रमसोर्भवेत् ॥ ११ ॥

अ०—तदनु बुधः तद्विधो भवेत्, तदनु चन्द्रोऽपि भवेत्, सूर्याचन्द्रमसोः तु रन्ध्रेशत्वदोषो न भवेदिति ॥ ११ ॥

सु०—बुध इति । तदनु गुरुशुक्रयोरनन्तरं, बुधः तद्विधः भवेत् केन्द्रेशत्वदोषवान् भवेत्, गुरुशुक्रयोरपेक्षयाऽल्पानिष्टकरो भवेदित्यर्थः । तदनु बुधादनन्तरं, चन्द्रः चन्द्रमास्तद्विधः अल्पानिष्टकरो भवेदिति । मारकस्थानसंस्थितिदोषोऽपि गुरुशुक्रयोरपेक्षया बुधस्याल्पानिष्टकरस्तस्मादपि न्यूनदोषकरश्चन्द्रस्य । सूर्याचन्द्रमसोः सूर्यचन्द्रयोः, रन्ध्रेशत्वदोषः लग्नादष्टमेशत्वदोषः । ( भाग्यव्ययाधिपत्येन रन्ध्रेशोनेत्यादिना प्रतिपादितः ) न भवेत् ॥ ११ ॥

भाषा—बृहस्पति और शुक्र की अपेक्षा बुध केन्द्रका स्वामी होतो अल्पदोषवाला है । बुध से चन्द्रमा अल्प दोष वाला है । मारकस्थान स्थितिजन्य दोष भी इसी प्रकार जानना, सूर्य और चन्द्रमा यदि अष्टमेश हो तो अष्टमेश जन्य दोष नहीं होता है ॥ ११ ॥

अथ पापग्रहाणां केन्द्राधिपतित्वेन शुभकारित्वं यदुक्तं तत्र विशेषमाह—

**कुजस्य कर्मनेतृत्वप्रयुक्ता शुभकारिता ।**

**त्रिकोणस्यापि नेतृत्वे न कर्मेशत्वमात्रतः ॥ १२ ॥**

अ०—कुजस्य कर्मनेतृत्वप्रयुक्ता शुभकारिता त्रिकोणस्य अपि नेतृत्वे ( सति ) भवति कर्मेशत्वमात्रतो न ॥ १२ ॥

सु०—कुजस्येति । कुजस्य कुत्सित जन्म जायते यस्मादसौ कुजः पापस्तस्य पापग्रहस्य, कर्मनेतृत्वप्रयुक्ता केन्द्रेशत्वप्रयुक्ता "न दिशन्ति शुभं नृणामित्यादौ प्रतिपादिता" या शुभकारिता शुभकारित्वं, सा त्रिकोणस्य अपि निश्चयेन, नेतृत्वे आधिपत्ये ज्ञेया, कर्मेशत्वमात्रतः केन्द्राधिपत्यमात्रतो न ज्ञेया, त्रिकोणेशत्वाभावे केवलंकर्मनेतृत्वमात्रेण न शुभ कारित्वमित्यर्थः ॥ १२ ॥

भाषा—पापग्रह केन्द्रेश होने से शुभफल दायक जो कहा गया है । वह त्रिकोणेश हो तो जानना, केवल केन्द्रेश होने से शुभफल दायक नहीं होता है ॥ १२ ॥

अथ राहुकेत्वोः शुभाशुभत्वमाह—

**यद्यद्भावगतौ वापि यद्यद्भावेशसंयुतौ ।**

**तत्तत्फलानि प्रबलौ प्रदिशेतां तमोग्रहौ ॥ १३ ॥**

अ०—प्रबलौ तमोग्रहौ यत् यत् भावगतौ अपि यत् यत् भावेशसंयुतौ वा स्यातां तत् तत् फलानि अपि प्रदिशेताम् ॥ १३ ॥

सु०—यद्यदिति । प्रबलौ बलवन्तौ, तमोग्रहौ राहुकेतू, यद्यद्भावगतौ यस्मिन् यस्मिन् भावे स्थितौ, अपि निश्चयेन, वा अथवा, यद्यद्भावेशसंयुक्तौ येन येन भावेशेन संयुतौ स्यातां, तत्तत्फलानि तानि तानि शुभाशुभफलानि प्रदिशेताम् ॥ १३ ॥

भाषा—प्रबल राहु और केतु जिस भाव में पड़े हों अथवा जिस भावेश के साथ बैठे हो उसी के अनुसार शुभाशुभ फल देते हैं ॥ १३ ॥

इति संज्ञाध्यायः प्रथमः ।

## अथ योगाध्यायः।

तत्र सामान्ययोगानाह—

**केन्द्रत्रिकोणपतयः सम्बन्धेन परस्परम्।**
**इतरैरप्रसक्ताश्चेद्विशेषफलदायकाः॥ १॥**

अ०—केन्द्रत्रिकोणपतयः चेत् इतरैः अप्रसक्ताः ताह परस्परं सम्बन्धेन विशेषफलदायकाः भवन्ति॥ १॥

सु०—केन्द्रत्रिकोणपतय इति। केन्द्रत्रिकोणपतयः केन्द्राणि प्रथमचतुर्थसप्तमदशमस्थानानि, त्रिकोणे नवमपञ्चमस्थाने तत्पतय इति केन्द्रत्रिकोणपतयः, चेद्यदि इतरैः केन्द्रत्रिकोणातिरिक्तस्थानाधिपैः त्रिषडायाधीशैरित्यर्थः। अप्रसक्ताः सम्बन्धरहिताः स्युस्तर्हि, परस्परं मिथः, सम्बन्धेन विशेषफलदायकाः भाग्ययोगकर्तारो भवन्ति॥ १॥

भाषा—केन्द्र (१, ४, ७, १०) त्रिकोण (९, ५) के स्वामी त्रिषडाय (३, ६, ११) के स्वामी से यदि सम्बन्ध न करे तो परस्पर सम्बन्ध होने से विशेषफल दायक होते हैं॥ १॥

अथ ग्रन्थान्तरे चतुर्विधसम्बन्धानाह—

व्यत्ययस्ताश्रयसम्बन्धश्चान्योन्यालोकसम्भवः।
एकस्य राशौ संस्थित्या तदीशालोकनादपि॥
सहवासाच्च सम्बन्धा इत्येतेस्युश्चतुर्विधाः।
अत्रापि पूर्वपूर्वाः स्युः सम्बन्धा बलवत्तराः॥

भाषा—सम्बन्ध चारप्रकार से होते हैं। दोनों परस्पर स्थान में हों (१), परस्पर एक दूसरे को देखता हो (२) एक दूसरे के स्थान में हो दूसरा उसको देखता हो (३), दोनों एक स्थान में हों (४), ये क्रम से प्रबल होते हैं। जैसे पहला सम्बन्ध से दूसरा, दूसरे से तीसरा, तीसरे से चौथा प्रबल होता है। अतः सबसे प्रबल सम्बन्ध चौथा है।

अथ केन्द्रत्रिकोणेशयोर्दोषयुक्तत्वेन न योगहानिरित्याह—

**केन्द्रत्रिकोणनेतारौ दोषयुक्तावपि स्वयम्।**
**सम्बन्धमात्राद्बलिनौ भवेतां योगकारकौ॥ २॥**

अ०—केन्द्रत्रिकोणनेतारौ स्वयं दोषयुक्तौ अपि सम्बन्धमात्रा द्वलिनौ सन्तौ योगकारकौ भवेताम् ॥ २ ॥

सु०—केन्द्रत्रिकोणनेताराविति । केन्द्रत्रिकोणनेतारौ केन्द्रत्रिकोणस्वामिनौ, स्वयं दोषयुक्तौ नीचत्वास्तगतत्वादिदोषयुक्तौ, अपि निश्चयेन, सम्बन्धमात्रात् अष्टसु सम्बन्धेषु कस्माच्चिदपि सम्बन्धात्, बलिनौ योगकारकौ भाग्ययोगकारकौ भवेताम् । अत्र केन्द्रत्रिकोणेशयोः सम्बन्धवशादष्टौ योगाभवन्ति । तद्यथा–लग्नेशपञ्चमेशयोः सम्बन्धादेको योगः, चतुर्थेशपञ्चमेशयोः सम्बन्धाच्चतुर्थः, लग्नेशनवमाधिपयोः सम्बन्धात्पञ्चमः, चतुर्थेशनवमाधिपयोः सम्बन्धात्षष्ठः, सप्तमेशनवमाधिपयोः सम्बन्धात्सप्तमः, दशमेशनवमाधिपयोः सम्बन्धादष्टम इति ॥ २ ॥

भाषा—केन्द्रेश और त्रिकोणेश आप दोष से युक्त हों तो भी सम्बन्ध मात्र से बली होते हैं, और भाग्य भोगकारक होते हैं ॥ २ ॥

अथ ग्राह्यसम्बन्धानाह—

निवसेतां व्यत्ययेन तावुभौ धर्मकर्मणोः ।
एकत्रान्यतरोवाऽपि वसेच्चेद्योगकारकौ ॥ ६ ॥

अ०—उभौ ता व्यत्ययेन धर्मकर्मणोः निवसेतां एकत्र वाऽन्यतरः अपि चेत् तदा योगकारकौ भवेताम् ॥ ३ ॥

सु०—निवसेतामिति । उभौ द्वौ, तौ केन्द्रत्रिकोणाधीशौ, व्यत्ययेन वैपरीत्येन, धर्मकर्मणोः केन्द्रत्रिकोणयोः निवसेतां अर्थात् केन्द्रेशस्त्रिकोणे त्रिकोणेशः केन्द्रे तिष्ठेत्तदायमेकः सम्बन्धः । एकत्र एक स्थान एव, निवसेतां अर्थादुभौ केन्द्रे वा त्रिकोणे वर्तमानौ स्यातां तदायं द्वितीयः सम्बन्धः । वाऽन्यतरः तयोर्मध्ये कश्चिदेकः अन्यस्य राशौ स्थितः, अर्थात् केन्द्रेशस्त्रिकोणे वा त्रिकोणेशः केन्द्रे वसेच्चेत्तदायं तृतीयः सम्बन्धः स्यात् । पूर्वोक्तत्रयाणां सम्बन्धानां कस्यचिदेकस्य सत्त्वे तौ केन्द्रत्रिकोणाधीशौ योगकारकौ भवेताम् । अत्र सम्बन्धस्वरूपावलोनेनैव प्रथमसम्बन्धाद्द्वितीयस्तस्मात्तृतीयो न्यून इति ज्ञायते ॥ ३ ॥

भाषा—केन्द्रेश त्रिकोण में और त्रिकोणेश केन्द्र में हो तो पहला सम्बन्ध, केन्द्रेश और त्रिकोणेश दोनों केन्द्र में वा त्रिकोण में हो तो दूसरा सम्बन्ध, केवल

केन्द्रेश त्रिकोण में वा त्रिकोणेश केन्द्र में हो तो तीसरा सम्बन्ध होता है। इसमें प्रथम सम्बन्ध से द्वितीय सम्बन्ध और द्वितीय सम्बन्ध से तृतीय सम्बन्ध न्यून है। अतः तीसरा सम्बन्ध सबसे न्यून है ॥ ३ ॥

अथ योगेषूत्कृष्टतामाह—

**त्रिकोणाधिपयोर्मध्ये सम्बन्धो येन केनचित् ।**
**बलिनः केन्द्रनाथस्य भवेद्यदि सुयोगकृत् ॥ ४ ॥**

अ०—त्रिकोणाधिपयोः मध्ये येन केनचित् यदि बलिनः केन्द्रनाथस्य सम्बन्धो भवेत् तदा स सुयोगकृत् भवति ॥ ४ ॥

सु०—त्रिकोणाधिपयोरिति । त्रिकोणाधिपयोः पञ्चमनवमाधिपयोर्मध्ये, येन केनचित् पञ्चमाधिपेन नवमाधिपेन वा, यदि चेत्, बलिनः बलवतः, केन्द्रनाथस्य केन्द्राधिपस्य, सम्बन्धो भवेत्तदा, स सम्बन्धः, सुयोगकृत् उत्कृष्टयोगकारको भवेत् ॥ ४ ॥

भाषा—पञ्चमेश वा नवमेश में से किसी एक से यदि बली केन्द्रेश का सम्बन्ध हो तो उत्कृष्ट योग कारक होता है ॥ ४ ॥

अथ योगानां फलसमयमाह—

**दशास्वपि भवेद्योगः प्रायशो योगकारिणोः ।**
**दशाद्वयीमध्यगतस्तदयुक्शुभकारिणाम् ॥ ५ ॥**

अ०—प्रायशः योगकारिणोः दशाद्वयीमध्यगतः तदयुक् शुभकारिणां दशासु अपि योगः भवेत् ॥ ५ ॥

सु०—दशास्वपीति । प्रायशः बाहुल्येन, योगकारिणोः योगकारकग्रहयोः दशाद्वयीमध्यगतः दशाद्वयसमाहारो दशाद्वयी तन्मध्यगतः एकस्य दशाऽन्यस्यान्तर्दशा तन्मध्यगतः, तदयुक्शुभकारिणां योगकारकग्रहसम्बन्धवर्जितानां शुभग्रहाणां, दशाप्रत्यन्तर्दशासु, अपि निश्चयेन, योगः शुभाप्तिर्भवेत् ॥ ५ ॥

भाषा—विशेष करके योगकारी ग्रह की दशा में उसके सम्बन्धी ग्रह की अन्तर्दशा में इन दोनों से सम्बन्ध रहित शुभ ग्रह की प्रत्यन्तर्दशा में शुभफल प्राप्ति होती है ॥ ५ ॥

अथ पापग्रहाणां सम्बन्धेन योगफलसमयमाह—

**योगकारकसम्बन्धात्पापिनोऽपि ग्रहाः स्वतः ।**

केन्द्रेश त्रिकोण में वा त्रिकोणेश केन्द्र में हो तो तीसरा सम्बन्ध होता है। इसमें प्रथम सम्बन्ध से द्वितीय सम्बन्ध और द्वितीय सम्बन्ध से तृतीय सम्बन्ध न्यून है। अतः तीसरा सम्बन्ध सबसे न्यून है ॥ ३ ॥

अथ योगेषूत्कृष्टतामाह—

त्रिकोणाधिपयोर्मध्ये सम्बन्धो येन केनचित्।
बलिनः केन्द्रनाथस्य भवेद्यदि सुयोगकृत् ॥ ४ ॥

अ०—त्रिकोणाधिपयोः मध्ये येन केनचित् यदि बलिनः केन्द्रनाथस्य सम्बन्धो भवेत् तदा स सुयोगकृत् भवति ॥ ४ ॥

सु०—त्रिकोणाधिपयोरिति। त्रिकोणाधिपयोः पञ्चमनवमाधिपयोर्मध्ये, येन केनचित् पञ्चमाधिपेन नवमाधिपेन वा, यदि चेत्, बलिनः बलवतः, केन्द्रनाथस्य केन्द्राधिपस्य, सम्बन्धो भवेत्तदा, स सम्बन्धः, सुयोगकृत् उत्कृष्टयोगकारको भवेत् ॥ ४ ॥

भाषा—पञ्चमेश वा नवमेश में से किसी एक से यदि बली केन्द्रेश का सम्बन्ध हो तो उत्कृष्ट योग कारक होता है ॥ ४ ॥

अथ योगानां फलसमयमाह—

दशास्वपि भवेद्योगः प्रायशो योगकारिणोः।
दशाद्वयीमध्यगतस्तदयुक्शुभकारिणाम् ॥ ५ ॥

अ०—प्रायशः योगकारिणोः दशाद्वयीमध्यगतः तदयुक् शुभकारिणां दशासु अपि योगः भवेत् ॥ ५ ॥

सु०—दशास्वपीति। प्रायशः बाहुल्येन, योगकारिणोः योगकारकग्रहयोः दशाद्वयीमध्यगतः दशाद्वयसमाहारो दशाद्वयी तन्मध्यगतः एकस्य दशाऽन्यस्यान्तर्दशा तन्मध्यगतः, तदयुक्शुभकारिणां योगकारकग्रहसम्बन्धवर्जितानां शुभग्रहाणां, दशाप्रत्यन्तर्दशासु, अपि निश्चयेन, योगः शुभाप्तिर्भवेत् ॥ ५ ॥

भाषा—विशेष करके योगकारी ग्रह की दशा में उसके सम्बन्धी ग्रह की अन्तर्दशा में इन दोनों से सम्बन्ध रहित शुभ ग्रह की प्रत्यन्तर्दशा में शुभफल प्राप्ति होती है ॥ ५ ॥

अथ पापग्रहाणां सम्बन्धेन योगफलसमयमाह—

योगकारकसम्बन्धात्पापिनोऽपि ग्रहाः स्वतः।

लग्नास्पदानङ्गगृहोपयाता बलान्विताः शोभनखेचरेन्द्राः ।
कुजार्कपुत्रौ नवमायसंस्थौ नृपो भवेत्सर्वगुणाभिरामः ॥
वर्गोत्तमांशोपगते विलग्ने चन्द्रेऽथवा चन्द्रविमुक्तखेटः ।
सुखास्पदानङ्गगृहोपयातैर्विलोकितैर्मानवनायकः स्यात् ।
अश्विन्यामुदयस्थिते भृगुसुते सर्वग्रहैरीक्षिते ॥
जातो राजकुलाग्रजो रिपुकुलध्वंसी बहुस्त्रीरतः ।

हित्वा नीचनवांशमम्बरचरैस्त्र्याद्यैः स्वभागान्वितै—
रेको लग्नगतो यदि क्षितिपतिः पञ्चादिकैर्वित्तवान् ॥

शुक्रेऽरिनीचमपहाय कुटुम्बसंस्थे लग्नेश्वरे बलयुते पृथिवीपतिः स्यात् ।
चन्द्रेऽतिमित्रनिजभागगते निशायां शुक्रेक्षिते नृपतिरन्यविलोकहीने ॥

मीने मीननवांशके भृगुसुते लग्नस्थिते भूपतिः
स्वोच्चे लग्नगृहाधिपे बलयुते राजा शशांकेक्षिते ।
लग्नस्वामिनि तुङ्गमन्दिरगते नीचारिभागं विना
केन्द्रस्थानगते नभोगवियुते जातो महीपालकः ॥

भाग्यस्थे निजतुङ्गमित्रभवने सम्पूर्णगात्रे विधौ
लग्नादास्पदवित्तराशिगतयोः शन्यारयोर्भूपतिः ।
चन्द्रे पूर्णकलान्विते बलयुते लग्नं विना केन्द्रगे
दृष्टे दानवमन्त्रिणा च गुरुणा राजा महोदानकृत् ॥

एकस्मिन् परमोच्चगेऽतिसुहृदा दृष्टे यदि क्ष्मापति-
स्तत्तुल्यो भृगुनन्दने बलयुते लाभेऽथवा रिःफगे ।
द्वित्रिव्योमचरेषु तुङ्गगृहगेष्विन्दौ कुलीरे स्थिते
लग्ने पूर्णबलान्विते नरपतिः सर्वत्र पूज्यो भवेत् ॥
सर्वे चोपचयस्थिताः शुभखगाः पापाविलग्नस्थिता-
मानस्था यदि वा जितारिनिचयः क्रूरो महीपालकः ।
भानौ सप्तमगे निशाकरयुते तुङ्गादिवर्गस्थिते
सौम्यासौम्यनिरीक्षितेऽतिचपलो राजाऽथवा तत्समः ॥
चापाजसिंहभवनोदयगे धराजे मित्रेक्षिते निजबलार्जितराज्यकर्ता ।
दुश्चिक्यधर्मसुतगा रविचन्द्रजीवा वीर्यान्विता यदि कुबेरसमो नृपालः ॥

नीचं गतो जन्मनि यो ग्रहः स्यात्तद्राशिनाथोऽपि तदुच्चनाथः ।
स चन्द्रलग्नाद्यदिकेन्द्रवर्ती राजा भवेद्धार्मिकचक्रवर्ती ॥
नीचस्थिते ग्रहनवांशपतौ त्रिकोणे केन्द्रेऽथवा चरगृहे यदि जन्मलग्ने ।
तद्भावपे चरगृहांशसमन्विते वा जातो महीपतिरतिप्रबलोऽथवा स्यात् ॥

मानस्थानपतौ पराभवगते पारावतांशेऽथवा
स्वोच्चस्वर्क्षसुहृन्नवांशकगते राजाधिराजो भवेत् ।
जीवस्य व्ययगे शनौ सहजगे लाभेऽथवा भास्करे
रिःफे लग्नपतौ तु निर्जरगुरावुर्वीशराजो भवेत् ॥
लग्ने नीचगृहे पुरन्दरगुरौ रन्ध्रे सपापग्रहे
तद्भाद्यंशसमन्विते यदि तथा राजाधिराजो भवेत् ।
भाग्येशस्थनवांशपे तनयगे बन्धुस्थिते वा नृपो-
दृष्टे वा शशिजे सुरेन्द्रगुरुणा युक्ते स राजप्रियः ॥

भाग्येशेन निरीक्षिते शशिसुते केन्द्रस्थिते भूभुजाम्
तुल्यत्वं समुपैति जातमनुजो लग्नस्थिते वाक्पतौ
केन्द्रे वा यदि कोणगे रविसुते मूलत्रिकोणोच्चगे
लाभेशेन निरीक्षिते बलयुते भूपालतुल्यो भवेत् ॥
लग्ने शीतकरे गुरौ सुखगते कर्मस्थिते भार्गवे
तुङ्गस्वर्क्षगते दिवाकरसुते राजाऽथवा तत्समः ।
अन्त्योपान्त्यविलग्नवित्तसहजव्यापारगेहेषु वा
सौम्यव्योमचरेषु भूपतिसमो राजाधिराजप्रियः ॥

मन्दे चोत्तमवर्गके बलयुते नीचांशवर्ज्ये गुरौ
भानौ शोभनदृष्टिभागसहिते राजप्रियस्तत्समः ।
राहौ कर्मणि लाभगे रविसुते भाग्याधिपेनेक्षिते
लग्नेशे यदि नीचखेचरयुते पृथ्वीशतुल्यो भवेत् ॥

नीचङ्गता द्वित्रिचतुर्ग्रहेन्द्राः षष्ठ्यंशके शोभनभागयुक्ताः ।
स्वतुङ्गराश्यंशसमन्विते वा धारापतिर्धार्मिकचक्रवर्ती ॥
लग्नात्मकर्मशुभाधिपौ शुभगृहाद्व्यापारधर्मेश्वरौ
मानादास्पदभाग्यपौ च सहितावन्योन्यराशिस्थितौ ।

अन्योन्येक्षणकेन्द्रगौ धनपतेः सम्बन्धिनौ चेद्धनी
जातो यानपकायपेक्षितयुतौ बह्वर्थयानाधिपः ॥
षट्सु ग्रहेषूच्चगृहस्थितेषु राजाधिराजोऽखिलभूपतिः स्यात्।
उच्चं गतैः पञ्चभिरिन्द्रवंद्ये लग्नस्थिते सर्वजनावनीशः ॥
कुटुम्बसंस्थे रविजे चतुर्भिः स्वोच्चं गतैः सर्वमहीपतिः स्यात्।
मषोदयस्थे यदि चन्द्रपुत्रे स्वोच्चं गते देवगुरौ नृपालः ॥

चन्द्रे वृषोदयगते यदि षड्भिरन्यैर्दृष्टेऽतिबाल्यवयसि क्षितिनायकः स्यात्।
तुङ्गस्थितैकखचरे निजमित्रजातैरन्यः समेति नरपालसमानभाग्यम् ॥

वर्गोत्तमे वा यदि पुष्करांशे शौरेन्दुदेवेन्द्रगुरौ नृपालः।
कर्मस्थिते शोभनदृष्टियुक्ते सम्पूर्णगात्रे शशिनि क्षितीशः ॥

गुरुसितयुतचन्द्रे चापगे चन्द्रसूनौ यदि तनुगृहयाते भूमिजे कन्यकायाम्।
मृगसुखभवनस्थे भानुपुत्रे नृपः स्यादतिशयबलयुक्तः सर्वभूपालपूज्यः ॥

कन्यावसानयुगचापमृगाननस्थैः सौम्येन्दुभौमगुरुभानुसुतैर्नृपालः।
मीनोदये शशिनि पूर्णतनौ बलाढ्ये स्वोच्चे कुजे रविसुते घटगे नरेशः ॥
मृगोदयस्थे यदि भूकुमारे कुलीरगे चन्द्रमसि क्षितीशः।
धराजपूषामरवन्द्यमाना मृगाजकुम्भोपगता नरेशः ॥
लग्नाधिपेतरयुते यदि पूर्णचन्द्रे शुक्रज्ञदेवगुरुदृष्टियुते च राजा।
वर्गोत्तमांशसहिता गुरुशुक्रभौमाः पापा न केन्द्रभवनोपगता नरेशः ॥

शीर्षोदयेषु निखिलद्युचरेषु चन्द्रे सौम्यग्रहेक्षणयुते कटके महीपः।
लग्नाधिपे नवमगे दशमस्थिते वा लग्ने सुधाकरयुते पृथिवीपतिःस्यात्॥
चापार्द्धं गतवान् सहस्रकिरणस्तत्रैव ताराधिपो
लग्ने भानुसुतेऽतिवीर्यसहिते स्वोच्चे च भूनन्दनः।
यद्येवं भवति क्षितेरधिपतिः सन्त्यज्य शौर्यं भया-
द्दूरादेव हि तस्य यान्ति रिपवो दग्धाः प्रतापाग्निना ॥
उपचयगृहसंस्थो जन्मपो यस्य चन्द्रात्
शुभगृहमथवाशं केन्द्रयाताश्च सौम्याः।
सकलबलवियुक्ता ये च पापाभिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन ॥

उच्चाभिलाषी सविता त्रिकोणे स्वर्क्षे शशी जन्मनि यस्य जन्तोः।
स शास्ति पृथ्वीं बहुरत्नपूर्णां बृहस्पतिः कर्कटगोपगश्चेत् ॥
स्वस्य त्रिकोणे रविरुच्चगोऽपि वा स्वराशिसंस्था रविशुक्रसोमजाः।
तृतीयषष्ठाष्टमगा निशाकरात् कुर्वन्ति गोपालमिव क्षितीश्वरम् ॥

अर्कज्ञौ सुखराशिस्थौ मन्देन्दू दशमस्थितौ। कुजोदये च सञ्जातो यदि राजा न संशयः॥
दिवाकरोदये सिंहे शुक्रांशकविवर्जिते। कन्यागते बुधे जातो नीचोऽपि पृथिवीपतिः ॥
रविशशिबुधशुक्रैर्व्योम्नि मित्रांशकस्थैर्न च रिपुभवनस्थैर्नाप्यदृश्यैर्ननीचैः।
स भवति नरपुत्रो भूपतिः स्यात्प्रयाणे गजमदजलसेकैः सिच्यते यस्य रेणुः ॥

क्षमासुतः स्वोच्चमुपाश्रितोबली रवीन्दुवाचस्पतिभिर्निरीक्षितः।
भवेन्नरेन्द्रो यदि कुत्सितस्तदा समस्तपृथ्वीपरिरक्षणक्षमः ॥
बुधोदये सप्तमगे बृहस्पतौ चन्द्रे कुलीरे सुखराशिगे भले।
वियद्गते भार्गवनन्दने गृहे प्रशास्ति पृथ्वीमगदो निराकुलः ॥

प्रधानबलसंयुक्तः सम्पूर्णः शशलाञ्छनः। एकोऽपि कुरुते जातं नराधिपमरिन्दमम्॥
देवमन्त्री कुटुम्बस्था भार्गवेण समन्वितः। करोति वसुधानाथं निर्जितारातिमण्डलम्

लग्नेशे केन्द्रराशिस्थे कर्मेशे वृद्धराशिगे।
भाग्येशे लाभगे जातश्चिरं जीवी महीपतिः ॥
रविलुप्तकरः सौम्यः स्वस्थो मूलत्रिकोणगः।
सर्वविद्याधिकोराजा नेतरेषां खचारिणाम् ॥
मानपुत्रोदयस्थौ वा मन्दावनिसुतौ यदि।
पूर्णेन्दौ गुरुराशिस्थे जातो राजा भविष्यति ॥
बली विलग्नाधिपतिश्च केन्द्रे भूपालयोगं कुरुते नराणाम्।
तन्मित्रदृष्टे यदि नीचवंशे जातोऽपि राजा नृपवन्दितो वा ॥
जन्माधिपः स्वोच्चगृहे मृगाङ्कं पश्यत्यवश्यं यदि भूमिपालः।
गजादिसेनातुरगादिसंघैर्जितारिकोटिर्जगति प्रजातः।

लग्नं विहाय केन्द्रस्थे चन्द्रे पूर्णबलान्विते। गुरुभार्गवसंदृष्टे जातो राजा भवेन्नरः ॥
लग्नेशे केन्द्रभावस्थे नीचमूढारिभं विना। नान्यग्रहयुते राजा सार्वभौमो भविष्यति ॥
गुरुचन्द्रदिवानाथाः सुतविक्रमधर्मगाः। जातो यदि महीपालः कुबेरसमवित्तवान् ॥
चापोदयस्थे बलिनि प्रभाकरे महीसुते कर्मगते ससीतगौ।

उपान्त्यगे वा भृगुजे व्ययस्थिते सुरेन्द्रतुल्यो पातः प्रजायत ॥
विक्रमायारिगाः पापा जन्मपः शुभवीक्षितः।
राजा भवति तेजस्वी समस्तजनवन्दितः॥

अथ मालिकायोगानाह—

लग्नदिसप्तगृहगा यदि शप्तखेटा जातोमहीपतिरनेकगजाश्वनाथः।
वित्तादिगो निधिपतिः पितृभक्तियुक्तो धीरोग्ररूपगुणवान् नरचक्रवर्ती॥
जातो यदा विक्रममालिकायां भूपः स शूरो धनिकश्चरोगी।
सुखादिकश्चेद्बहुदेशभाग्यभोगी महादानपरो महीपः॥

पुत्राद्या यदि मालिका नरपतिर्यज्वाऽथवा कीर्तिमान्
जातः षष्ठगृहात् क्वचिद्धनसुखप्राप्तो दरिद्रो भवेत्।
कामादिर्गृहमालिका यदि बहुस्त्रीवल्लभो जायते
दीर्घायुर्धनवर्जितो नरवरः स्त्रीनिर्जितश्चाष्टमात्॥

धर्मादिर्गृहमालिका गुणनिधिर्यज्वा तपस्वी विभुः
कर्माद्या यदि धर्मकर्मनिरतः सम्पूजितः सज्जनैः।
लाभाद्राजवराङ्गनामणिपतिः सर्वक्रियादक्षको
जातो रिःफगृहाद्बहुव्ययकरः सर्वत्र पूज्यो भवेत्॥

अथ प्रसङ्गाद् दरिद्रयोगानाह—

भाग्येश्वरादतिबलो विधनेश्वरो वा लग्नाधिपस्त्रिदशनाथगुरुर्यदि स्यात्॥
केन्द्राद्बहिर्दिनकरस्य कराभितप्तो लाभाधिपो यदि विहीनबलो दरिद्रः॥

लाभारिव्ययरन्ध्रपुत्रगृहगा जीवारमन्देन्दुजा–
नीचस्थानगता यदा रविकरच्छन्नास्तदा भिक्षुकः।
भाग्यस्थानगतोदिनेशतनयः सौम्येतरैरीक्षितो–
लग्नस्थः शशिनन्दनो रवियुतो नीचांशगो भिक्षुकः॥

जीवज्ञशुक्ररविनन्दनभूमिपुत्रा रन्ध्रारिरिःफसुतकर्मगता यदि स्युः।
लग्नेश्वरादतिबली व्ययभावनाथो नीचस्थितो रविकराभिहतो दरिद्रः॥

शुक्रार्यद्विजराजभूमितनया नीचस्थिता जन्मनि
व्योमाये नवमे कलत्रतनये जातो दरिद्रो भवेत्।

लग्ने दानवपूजितेऽमरगुरौ पुत्रे धरानन्दने
लाभे रात्रिकरे तृतीयभवने नीचं गते भिक्षुकः ॥
लग्ने चरे चरनवांशगते सितेन दृष्टे च नीचगुरुणा यदि भिक्षुकः स्यात्।
जातो विनाऽमरपुरोहितलग्नराशिर्जीवे रिपुव्ययगते तु भवेद्दरिद्रः ॥
जातः स्थिरे लग्नगतेषु पापाः केन्द्रत्रिकोणोपगताश्च सर्वे ।
केन्द्राद्बहिःस्थानगताश्च सौम्या भिक्षाशनः स्यात्परयोषितश्च ॥
चरे विलग्ने निशि सौम्यखेटास्त्रिकोणकेन्द्रोपगता न वीर्याः ।
खलग्रहाः केन्द्रबहिःस्थिताश्चेद् भिक्षाशनं नित्यमुपैति जातः ॥
पापा नीचस्थानगाः पापकर्मा सौम्या नीचस्थानगा रूढपापाः ।
जीवे नीचस्थानगे कर्मराशौ नीचे भौमे नन्दनस्थे तथैव ॥
नीचांशगास्तुङ्गगृहोपयाता जातस्य नीचं फलमाशु दद्युः ।
नीचङ्गतास्तुङ्गनवांशकस्थाः सौम्यं फलं व्योमचराः प्रकुर्युः ॥

अथ दरिद्रयोगफलम्—

निर्भाग्यो विकलेन्द्रियो विषमधीर्दारात्मजैर्निन्दितो
भिक्षाशी विषमस्थितो विषमवाक् शिश्नोदरे तत्परः
अन्यायार्जनतत्परस्त्वनुदिनं मात्सर्यवाक् कण्टकी
नित्यं स्यात्परदाररतसहृदयो नीचोऽधमूको जडः ॥
दरिद्रयोगे कलहः प्रियः स्यात् कुष्ठी परेषां हितहृत्कृतन्धः ।
वाचालको भूसुरभक्तिहीनः कुदारहीनः कुनखी च जातः ॥

इत्युडुदायप्रदीपे योगाध्यायो द्वितीयः ।

---

## अथायुर्विचाराध्यायः ।

तत्रादावायुःस्थानं मारकस्थानं चाह—

अष्टमं ह्यायुषः स्थानमष्टमादष्टमं च यत् ।
तयोरपि व्ययस्थानं मारकस्थानमुच्यते ॥ १ ॥

अ०—अष्टमं हि आयुषः स्थानम् , अष्टमात् अष्टमं च यत् अपि आयुषः स्थानमुच्यते । तयोरपि व्ययस्थानं मारकस्थानम् उच्यते ॥१॥

मारकस्थाने, गताः प्राप्ताः, तेन मारकस्वामिना, संयुताः अन्विताः, ये पापिनः पापग्रहाः, तेषां दशाविपाकेषु नृणां निधनं भवेत्। तेषां मारकस्थानस्थितानां मारकेशेन संयुतानां पापग्रहाणाम्, असम्भवे साक्षाद् व्ययाधीशदशासु साक्षाद्व्ययाधीशा लग्नतो व्ययस्थानाधीशास्तेषां दशासु, अपि निश्चयेन, निधनं भवेत् ॥२,३॥

भाषा—मारकेश की दशा अन्तर्दशा समय में आयुर्दाय के अन्त समय उपस्थित होने पर मनुष्य की मृत्यु होती है। इसके असम्भव होने पर मारक स्थान में स्थित वा मारकेश से युक्त जो पाप ग्रह हों उनकी दशा अन्तर्दशा में मनुष्य का मरण होता है। इसके असम्भव हो तो जन्मलग्न से बारहवें स्थानके पतिकी दशादि में मरण होता है ॥ २,३ ॥

अथ पूर्वोक्तासम्भवे निर्णयमाह—

**अलाभे पुनरेतेषां सम्बन्धेन व्ययेशितुः।**
**क्वचिच्छुभानां च दशा ह्यष्टमेशदशासु च ॥ ४ ॥**

अ०—पुनः एतेषाम् अलाभे (सति) व्ययेशितुः सम्बन्धेन क्वचिच्च अष्टमेशदशासु हि ( निधनं भवेत ) ॥ ४ ॥

सु०—अलाभ इति। पुनः भूयः, एतेषां पूर्वोक्तानां योगानाम्, अलाभे अप्राप्ते, व्ययेशितुः द्वादशेशस्य, सम्बन्धेन सम्बन्धचतुष्टयेन, क्वचित् कुत्रचित्, शुभानां शुभग्रहाणां, दशा पाकः, मृत्युदा भवेत्। क्वचिच्च अष्टमेशदशासु जन्मलग्नादष्टमभवनाधीशदशासु, हि निश्चयेन, मनुष्याणां निधनं भवेत ॥ ४ ॥

भाषा—यदि पूर्वोक्त ग्रहों की दशा न मीलती हो तो व्ययेश के सम्बन्धी शुभ ग्रहों की दशा मरण को देती है। इसका भी असम्भव हो तो अष्टमेश की दशा में मृत्यु होती है ॥ ४ ॥

अथ पूर्वोक्तासम्भवे पुनर्निर्णयमाह—

**केवलानां च पापानां दशासु निधनं क्वचित्।**
**कल्पनीयं बुधैर्नृणां मारकाणामदर्शने ॥ ५ ॥**

अ०—(पूर्वोक्तानामखिलानां) मारकाणाम् अदर्शने ( सति ) केवलानां पापानां दशासु च क्वचित् बुधैः नृणां निधनं कल्पनीयम् ॥ ५ ॥

सु०—केवलानामिति। पूर्वोक्तानामखिलानां मारकाणां मारकयोगानाम्, अदर्शने अलाभे, सति, केवलानां मारकसम्बन्धेनापि रहितानां, पापानां पाप-

सु०—अथायुर्दायाध्यायो व्याख्यायते—अष्टममिति । अष्टमं जन्मलग्नादष्टमस्थानं, हि निश्चयेन, आयुषस्थानम् । यच्च अष्टमादष्टमं स्थानं जन्मलग्नात्तृतीयस्थानं, तदपि आयुषः स्थानम् उच्यते कथ्यते, तयोरपि आयुःस्थानयोरष्टमतृतीययोरपि, व्ययस्थानं पृथक् पृथक् तयोर्व्ययस्थानम् अष्टमस्य व्ययस्थानं सप्तमं, तृतीयस्य व्ययस्थानम् द्वितीयम्, अतः जन्मलग्नात्सप्तमं द्वितीयं च स्थानं, मारकस्थानम् उच्यते निगद्यते ॥ १ ॥

भाषा—जन्मलग्न से अष्टम स्थान निश्चय करके आयुः स्थान है। और अष्टम से अष्टम–तीसरा स्थान भी आयुः स्थान है। इन दोनों से द्वादश स्थान अर्थात् सप्तम और दूसरा स्थान मारक स्थान कहलाते हैं ॥ १ ॥

अथ सप्तमापेक्षया द्वितीयस्य बलवत्त्वमाह—

**तत्राप्याद्यव्ययस्थानाद्द्वितीयं बलवत्तरम् ॥ १½ ॥**

अ०—तत्र अपि आद्यव्ययस्थानात् द्वितीयं बलवत्तरं भवति ॥१½॥

सु०—तत्रापीति । तत्र सप्तमद्वितीययोर्मध्ये, अपि निश्चयेन, आद्यव्ययस्थानात् सप्तमस्थानात्, द्वितीयं मारकस्थानं अर्थाज्जन्मलग्नाद्द्वितीयं स्थानं, बलवत्तरम् अतिशयेन बलवत् भवतीति शेषः ॥ १½ ॥

भाषा—इन दोनों मारकस्थान में सप्तम से द्वितीय प्रबल मारक स्थान होता है ॥ १½ ॥

अथ मारकनिर्णयमाह—

**तदीशितुस्तत्र गताः पापिनस्तेन संयुताः ॥ २ ॥**
**तेषां दशाविपाकेषु सम्भवे निधनं नृणाम् ।**
**तेषामसम्भवे साक्षाद्व्ययाधीशदशास्वपि ॥ ३ ॥**

अ०—तत् ईशितुः दशाविपाकेषु सम्भवे ( सति ) नृणां निधनं ( भवेत् ), ( तदसम्भवे ) तत्रगताः तेन संयुक्ताः ( ये ) पापिनः तेषां दशाविपाकेषु सम्भवे ( सति ) नृणां निधनं ( भवेत् ), तेषाम् असम्भवे साक्षात् व्ययाधीशदशासु अपि निधनं ( भवेत् ) ॥ २, ३ ॥

सु०—तदीशितुरिति । तत् तस्य पूर्वप्रतिपादितमारकस्थानद्वयस्य, ईशितुः स्वामिनः, दशाविपाकेषु दशान्तर्दशादिरूपकालेषु, सम्भवे आयुर्दायावसानसमयप्राप्ते सति नृणां मानवानां, निधनं मरणं भवेत् तदसम्भवे तत्र तस्मिन्

मारकस्थाने, गताः प्राप्ताः, तेन मारकस्वामिना, संयुताः अन्विताः, ये पापिनः पापग्रहाः, तेषां दशाविपाकेषु नृणां निधनं भवेत्। तेषां मारकस्थानस्थितानां मारकेशेन संयुतानांपापग्रहाणाम्, असम्भवे साक्षाद् व्ययाधीशदशासु साक्षाद्व्ययाधीशा लग्नतो व्ययस्थानाधीशास्तेषां दशासु, अपि निश्चयेन, निधनं भवेत् ॥२,३॥

भाषा—मारकेश की दशा अन्तर्दशा समय में आयुर्दाय के अन्त समय उपस्थित होने पर मनुष्य की मृत्यु होती है। इसके असम्भव होने पर मारक स्थान में स्थित वा मारकेश से युक्त जो पाप ग्रह हों उनकी दशा अन्तर्दशा में मनुष्य का मरण होता है। इसके असम्भव हो तो जन्मलग्न से बारहवें स्थानके पतिकी दशादि में मरण होता है ॥ २,३ ॥

अथ पूर्वोक्तासम्भवे निर्णयमाह—

**अलाभे पुनरेतेषां सम्बन्धेन व्ययेशितुः।**
**क्वचिच्छुभानां च दशा ह्यष्टमेशदशासु च ॥ ४ ॥**

अ०—पुनः एतेषाम् अलाभे (सति) व्ययेशितुः सम्बन्धेन क्वचिच्च अष्टमेशदशासु हि ( निधनं भवेत ) ॥ ४ ॥

सु०—अलाभ इति। पुनः भूयः, एतेषां पूर्वोक्तानां योगानाम्, अलाभे अप्राप्ते, व्ययेशितुः द्वादशेशस्य, सम्बन्धेन सम्बन्धचतुष्टयेन, क्वचित् कुत्रचित्, शुभानां शुभग्रहाणां, दशा पाकः, मृत्युदा भवेत्। क्वचिच्च अष्टमेशदशासु जन्मलग्नादष्टमभवनाधीशदशासु, हि निश्चयेन, मनुष्याणां निधनं भवेत ॥ ४ ॥

भाषा—यदि पूर्वोक्त ग्रहों की दशा न मीलती हो तो व्ययेश के सम्बन्धी शुभ ग्रहों की दशा मरण को देती है। इसका भी असम्भव हो तो अष्टमेश की दशा में मृत्यु होती है ॥ ४ ॥

अथ पूर्वोक्तासम्भवे पुनर्निर्णयमाह—

**केवलानां च पापानां दशासु निधनं क्वचित्।**
**कल्पनीयं बुधैर्नृणां मारकाणामदर्शने ॥ ५ ॥**

अ०—(पूर्वोक्तानामखिलानां) मारकाणाम् अदर्शने ( सति ) केवलानां पापानां दशासु च क्वचित् बुधैः नृणां निधनं कल्पनीयम् ॥ ५ ॥

सु०—केवलानामिति। पूर्वोक्तानामखिलानां मारकाणां मारकयोगानाम्, अदर्शने अलाभे, सति, केवलानां मारकसम्बन्धेनापि रहितानां, पापानां पाप-

खेटानां, दशासु च पुनः, क्वचित् कुत्रचित्, बुधैः पण्डितैः, नृणां मानवानां, निधनं मरणं, कल्पनीयम् ॥ ५ ॥

भाषा—यदि पूर्वोक्त किसी मारक योगकी प्राप्ति न हो तो केवल पापग्रहों की दशामें ही पण्डितों को मरण कहना चाहिये ॥ ५ ॥

अथ मारकत्वे शनेर्विशेषमाह—

**मारकैः सह सम्बन्धान्निहन्ता पापकृच्छनिः ।**
**अतिक्रम्येतरान् सर्वान् भवत्येव न संशयः ॥ ६ ॥**

अ०—पापकृत् शनिः मारकैः सह सम्बन्धात् इतरान् अतिक्रम्य निहन्ता एव भवति अत्र संशयो न ( कार्यः ) ॥ ६ ॥

सु०—मारकैरिति । पापकृत् त्रिषडायाधीशत्वप्रयुक्ताशुभलक्षणाक्रान्तत्वात् पापकर्त्ता, शनिः मारकैः पूर्वप्रतिपादितमारकस्थानाधिपैः, सह सम्बन्धात् उक्तसम्बन्धचतुष्टयात्, इतरान् सर्वान् मारकान्, अतिक्रम्य उल्लङ्घ्य, निहन्ता नाशकर्त्ता, एव निश्चयेन, भवति, अत्र संशयो न सन्देहो न, विधेय इति शेषः ॥६॥

भाषा—पापी शनि मारक ग्रहोंके साथ सम्बन्ध करता हो तो उन सब पूर्वोक्त मारक ग्रहोंको उल्लंघन करके स्वयं मारक होता है इसमें संशय नहीं ॥ ६ ॥

अथात्र प्रसङ्गादायुरानयनाय विचारो विधीयते—

तत्र जैमिनिसूत्रे—

आयुः पितृदिनेशाभ्याम् ॥ १ ॥
प्रथमयोरुत्तरयोर्वा दीर्घम् ॥ २ ॥
प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ॥ ३ ॥
मध्ययोराद्यन्तयोर्वा हीनम् ॥ ४ ॥
एवं चन्द्रमन्दाभ्याम् ॥ ५ ॥
पितृकालतश्च ॥ ६ ॥

सु०—पितृदिनेशाभ्यां लग्नेशाष्टमेशाभ्यां, आयुः आयुर्विचारो विधेयः॥ १॥

कथं विचार्यमित्याह—प्रथमयोरिति । प्रथमयोः चरराशिस्थयोः, उत्तरयोः स्थिरद्विस्वभावराशिस्थयोः लग्नेशाष्टमेशयोः, दीर्घं दीर्घायुर्योगः स्यात् ॥ २ ॥

अथ मध्यायुर्लक्षणमाह—प्रथमद्वितीययोरिति । प्रथमद्वितीययोः चरस्थिरराशिस्थयोः, अन्तयोः द्विस्वभावराशिस्थयोर्वा लग्नेशाष्टमेशयोः, मध्यं मध्यायुर्योगः स्यात् ॥ ३ ॥

अथाल्पायुर्लक्षणमाह—मध्ययोरिति। मध्ययोः स्थिरराशिस्थयोः वा आद्यन्तयोः चरद्विस्वभावराशिस्थयोस्तयोः, हीनं हीनायुर्योगो भवेत् ॥ ४ ॥

अथ द्वितीयप्रकारेण विचार्यते—एवमिति। एवं पूर्वोक्तदिशा, मन्दचन्द्राभ्यां शनिसोमाभ्यां, आयुर्विचार्य्यम् ॥ ५ ॥

पुनस्तृतीयप्रकारेण विचार्य्यते। पितृकालत इति। पितृकालतः लग्नहोरालग्नाभ्यां, चैवं विचार्यम् ॥ ६ ॥

भाषा—लग्नेश और अष्टमेश पर से पहले आयुर्दायका विचार करना चाहिये॥१॥

लग्नेश और अष्टमेश यदि चरराशिमें हो अथवा एक स्थिरमें और दूसरा द्विस्वभाव राशिमें हो तो दीर्घायु योग होता है ॥ २ ॥

यदि एक चरमें और दूसरा स्थिरमें अथवा दोनों द्विस्वभावमें हो तो मध्यायु योग होता है ॥ ३ ॥

यदि दोनों स्थिरमें हो वा एक चरराशिमें और दूसरा द्विस्वभावमें हो तो अल्पायु योग होता है ॥ ४ ॥

इसी तरह शनि और चन्द्रमा परसे विचारना चाहिये ॥ ५ ॥

तथा लग्न और होरालग्न परसे भी इसी प्रकार बिचार करना ॥ ६ ॥

अथ प्रसङ्गाद्धोरालग्नानयने मदीयपद्यम्—

घटिकादिकमिष्टं यद्द्विगुणं पञ्चभिर्भजेत्।
लब्धं स्पष्टरवौ योज्यं होरालग्नं भवेद्धि तत् ॥

भाषा—घटिकादिक इष्ट जो हो उसका दूना करके पांचका भाग देकर जो लब्धि हो उसको तात्कालिक स्पष्ट रविमें जोड़े तो होरालग्न होता है ॥

अत्र त्रिविधानीतायुर्दायेषु प्रकारत्रयेण प्रकारद्वयेन समत्वे निर्णयमाह—

**संवादात् प्रामाण्यम् ॥ ७ ॥**

सु०—संवादादिति। संवादात् प्रकारत्रयागतेन प्रकारद्वयागतेन वा आयुषः समत्वे, प्रामाण्य प्रकारत्रयागतेन प्रकारद्वयागतेन वा यदायुस्तदेव ग्राह्यम् ॥ ७ ॥

भाषा—यदि तीनों प्रकारसे वा दोनों प्रकारसे एक चालकी आयु आवे तो वही ग्रहण करना चाहिये ॥ ७ ॥

अथ प्रकारत्रयागतानामायुर्दायानां विसंवादे निर्णयमाह—

**विसंवादे पितृकालतः ॥ ८ ॥**

सु०—विसंवाद इति। विसंवादे प्रकारत्रयागतायुर्दाये भिन्ने भिन्ने समागते सति, पितृकालतः लग्नहोरालग्नाभ्यामागतायुरेव ग्राह्यम् ॥ ८ ॥

भाषा—अगर तीनों प्रकारसे भिन्न भिन्न आयुर्दाय आवे तो लग्न और होरा-क्रमसे आया हुआ आयुर्दायका ग्रहण करना चाहिये ॥ ८ ॥

अथात्र विशेषसूत्रमाह—

पितृलाभगे चन्द्रे मन्दचन्द्राभ्याम् ॥ ९ ॥

सु०—पितृलाभग इति । पितृलाभगे लग्नस्थे वा सप्तमस्थे, चन्द्रे सति, मन्दचन्द्राभ्यां शनिसोमाभ्यां, समागतायुरेव ग्राह्यम् । अन्यथा लग्नहोरालग्नाभ्यामागतमेवायुर्ग्राह्यमित्यर्थः ॥ ९ ॥

भाषा—अगर चन्द्रमा लग्न या सप्तममें हो तो शनि चन्द्रमा परसे समागत आयुका ही ग्रहण करना चाहिए ॥ ९ ॥

एवं ग्रन्थान्तरेऽपि—

आदौ लग्नाष्टमेशाभ्यां योगमेकं विचिन्तयेत् ।
जन्महोराविलग्नाभ्यां द्वितीयं परिचिन्तयेत् ॥
तृतीयं शनिचन्द्राभ्यां चिन्तयेत्तु द्विजोत्तम ?
योगत्रयेण योगाभ्यां सिद्धं यद् ग्राह्यमेव तत् ॥
योगत्रयविसंवादे लग्नहोराविलग्नतः ।
लग्ने वा सप्तमे चन्द्रे चिन्तयेन्मन्दचन्द्रतः ॥

अस्यार्थः प्रागेव स्फुटीकृत इति ।

स्फुटार्थमायुर्बोधकचक्रम्—

| | १ योगः | २ योगः | ३ योगः |
|---|---|---|---|
| दीर्घायुः | चरभे लग्नेशः<br>चरभेऽष्टमेशः | स्थिरभे लग्नेशः<br>द्विस्वभावेऽष्टमेशः | द्विस्वभावे लग्नेशः<br>स्थिरभेऽष्टमेशः |
| मध्यायुः | चरभे लग्नेशः<br>स्थिरभेऽष्टमेशः | स्थिरभे लग्नेशः<br>चरभेऽष्टमेशः | द्विस्वभावे लग्नेशः<br>द्विस्वभावेऽष्टमेशः |
| अल्पायुः | चरभे लग्नेशः<br>द्विस्वभावेऽष्टमेशः | स्थिरभे लग्नेशः<br>स्थिरभेऽष्टमेशः | द्विस्वभावे लग्नेशः<br>चरभेऽष्टमेशः |

उदाहरणम्—

कस्यचिज्जन्मकुण्डलीयम्—




अत्र सूर्योदयादिष्टघट्यादिः = १७।२६ तात्कालिकोऽर्कः = ५।१५।४६।३१ घटिकादिकमिष्टं = १७।२६, द्विगुणं = ३४।५२, पञ्चभिर्भक्तं लब्धं राश्यादिकं = ७।४।२४। इदं स्पष्टरवौ योजनीयं तदा जातमत्र प्रयोजनीयहोरालग्नमानम् = ००।२०।१०।३१।

अथायुर्दायो विचार्य्यते—

तत्र प्रथमं लग्नेशाष्टमेशाभ्यां विचार्य्यते—

अत्र लग्नेशो गुरुः स्थिरराशौ वर्तते, अष्टमेशश्चन्द्रश्च द्विस्वभावराशौ तेन "प्रथमयोरुत्तरयोर्वा दीर्घम्" इति सूत्रेण दीर्घायुरायाति।

अथ शनिचन्द्राभ्यां विचार्य्यते—

अत्र शनिचन्द्रयोर्द्वयोरपि द्विस्वभावराशौ वर्तमानत्वात् "प्रथमद्वितीययोरन्त्ययोर्वा मध्यम्" इति सूत्रेण मध्यायुरायाति।

अथ लग्नहोरालग्नाभ्यां विचार्य्यते—

अत्र लग्नं द्विस्वभावराशौ वर्त्तते, होरालग्नं तु चरराशौ तेन "मध्ययोराद्यन्तयोर्वा हीनम्" इति सूत्रेण हीनायुरायाति।

एवमत्र प्रकारत्रयेण भिन्ने भिन्ने समागते आयुषि "विसंवादे पितृकालतः" इति सूत्रेण हीनायुरेव ग्राह्यम्। परञ्चात्र लग्ने चन्द्रस्य व्यवस्थितत्वात् "पितृलाभगे चन्द्रे मन्दचन्द्राभ्याम्" इति सूत्रेण मन्दचन्द्राभ्यामागतं मध्यमायुरेवास्य जातकस्येति।

अथायुर्भेदानाह—

रसाङ्कै ९६ र्गजाभ्रेन्दुभिः १०८ शून्यमासै १२०
स्त्रिधा दीर्घमायुः कलौ सम्प्रदिष्टम्।
चतुःषष्टि ६४ बाह्वद्रय ७२ शीति ८० प्रमाणै-
र्मतं मध्यमायुर्नृणां वत्सरैः स्यात्॥

तथा द्वित्रि ३२ षड्वह्नि ३६ शून्याब्धिवष- ४०
र्भवेदल्पमायुर्नराणां युगान्ते। स्पष्टम्।

अथ दीर्घायुर्योगादिज्ञानाय लाघवेन कश्चिदाह—

अल्पायुर्लग्नपे भानोः शत्रौ, मध्ये च मध्यमम्।
मित्रे लग्नेश्वरे तस्य दीर्घमायुरुदाहृतम्॥

भाषा—लग्नेश यदि रवि का शत्रु हो तो अल्पायु सम हो तो मध्यायु और मित्र हो तो दीर्घायु कहना चाहिये।

अथ ग्रन्थान्तरादाकृष्यायुर्विचारः सविस्तरं विलिख्यते—

आयुर्दायमनिष्टहेतुमुदयव्योमायुरीशार्कजै-
रुक्तं तत्सकलं तथापि निधनप्राप्तिं प्रवक्ष्ये पुनः।
अल्पायुर्व्ययगेऽथवा रिपुगते पापान्विते रन्ध्रपे
लग्नेशेन युते तु तत्र विबले जातोऽल्पजीवी नरः॥

स्वस्थे रन्ध्रपतौ चिरायुरुदयच्छिद्राधिपौ षष्ठगौ
रिःफस्थौ यदि वा समेति मनुजो जातश्चिरायुर्बलम्।
व्यापारोदयरन्ध्रराशिपतयः केन्द्रत्रिकोणायगा-
दीर्घायुर्विबलाः समानुतनया यद्यल्पमायुर्वदेत्॥

कर्मेशरन्ध्रतनुपा बलशालिनश्चेज्जातश्चिरायुरिनन्दनयोगहीनाः।
द्वावप्यतीव बलिनौ यदि मध्यमायुरेको बली लघुतरायुरनायुरन्यः॥

रन्ध्राऽधिपे पापगृहोपयाते दुःस्थानगे पापयुतेऽल्पमायुः।
शुभान्विते शोभनराशियुक्ते शुभेक्षिते रन्ध्रगते चिरायुः॥

नाशस्थे तनुपेऽथवा निधनपे पापेन युक्तेक्षिते
मूढे हृदयगतेऽथवा रिपुगृहे जातोगतायुर्भवेत्।
दीर्घायुर्निजतुङ्गगे शुभयुते केन्द्रत्रिकोणेऽथ वा

रन्ध्रे रन्ध्रपतौ चिरायुरुदयं याते विलग्नाधिपे ॥

लग्नादन्त्यगृहाधिपे बलवति स्वर्क्षे चिरायुः सुखी
लग्नेशो यदि रन्ध्रपश्च बलिनौ केन्द्रस्थितौ चेत्तथा ।
आधानोदयराशितोऽष्टमगृहान्मेषूरणं जन्मभं
शुक्रज्ञामरवन्दितेक्षितयुतं यद्यायुरारोग्यभाक् ॥

रन्ध्रेशे रिपुरन्ध्ररिःफगृहगे तत्पाकभुक्तौ मृतिं
मन्दाक्रान्तगृहेशपाकसमये रन्ध्रेशभुक्तौ तथा ।
पाके रन्ध्रगृहाधिपस्य तदनुक्रान्तस्य भुक्तौ तु वा
खेटानां बलदुर्बलेन सकलं सञ्चिन्त्य यत्तद्वदेत् ॥

लग्नेशे निधनारिरिःफगृहगे साहौ सकेतौ तु वा
होरारन्ध्रपसंयुतग्रहदशा जातस्य मृत्युप्रदा ।
तत्खेटान्वितराशिनायकदशा नाशप्रदा देहिनां
खेटानां प्रथमागतस्य फणिनः पाकापहारे क्रमात् ॥

व्यापाररन्ध्रतनुनाथशनैश्चराणां मध्ये विधुन्तुदयुतो विबलग्रहो यः ।
तत्पाकभुक्तिसमये निधनं नराणां तद्युक्तवीक्षकनभोगदशान्तरे वा ॥

नाशे नाशपतौ तु तद्ग्रहदशाभुक्तौ समेत्यामयं
लग्ने लग्नपतौ तु लग्नपदशाभुक्तौ शरीरार्तिभाक् ।
पश्चादामयनाशनं तनुसुखं मोदश्च सञ्जायते
रन्ध्रेशे बलसंयुते तनुपतेर्दाये मृतिर्देहिनाम् ॥

जातस्य जन्मसमये विबले विलग्ने लग्नेशरन्ध्रपतिपाकमतीव कष्टम् ।
पश्चादतीव सुखमेति विलग्ननाथे वीर्यान्विते निधनपस्य मृतिर्दशायाम् ॥

देहेशे च विनाशपे बलयुते केन्द्रत्रिकोणस्थिते
तद्युक्तग्रहपाकभुक्तिसमये रोगापवादः फलम् ।
रन्ध्रेशस्तनुपश्च खेचरयुतौ केन्द्रत्रिकोणस्थितौ
रन्ध्रस्थानगतस्य पाकसमये मृत्युं समेति ध्रुवम् ॥

नोचेदष्टमखेचरो यदि तनु प्राप्तेन सञ्चिन्तये-
न्मन्दे लग्नगतेऽथवाऽष्टमगते तत्पाकभुक्तौ मृतिः ।

रन्ध्रशोदयनायकौ सखचरौ युक्तग्रहो दुर्बलो-
यस्तस्य द्युचरस्य पाकसमये भुक्तौ च मृत्युं वदेत् ॥

लग्नात्पञ्चमराशिपेन सहितव्योमाटनानां दशा
तावशेषगृहगे मृत्युं दिनेशे सति ।
पुत्रेशेन वियच्चरेण सहितस्वाङ्केन सञ्चिन्तये-
ल्लग्नेशेन युताङ्कभङ्गविहृतं संक्रान्तिपूर्वं दिनम् ॥

त्रिकोणे केन्द्रे वा यदि पितृतनुक्षेत्रपतयो-
दशा भुक्तौ तेषामनुमरणमाहुर्मुनिगणाः ।
सभौमे मन्दाढ्ये फणियुजि तु चन्द्रौ निधनगे
स्वपस्मारस्तस्मान्मरणमथचेन्दौ कृशतनौ ॥

चन्द्रे वित्तगतेऽथवा निधनगे जातो बहुस्वेदवान्
कर्मस्थानगते कुजे बुधयुते दुर्गन्धदेहो भवेत् ।
पापे रन्ध्रगते तु पापसहिते रोगप्रमादाकरः
सौम्यव्योमगृहेऽतिशोभनयुते जातः समोदः सुखी ॥

शीर्षोदयेषु चरभादिषु वित्तपस्य लग्नाधिपस्य भुजगस्य दशापहारे ।
पृष्ठोदये सति तदीयदृगाणपस्य तद्वीक्षितादिसहितस्य मृतिं वदेद्वा ॥
पूर्वोक्तानि पद्यानि स्फुटान्येव ग्रन्थविस्तरभयान्न व्याख्यायते ।

अथ प्रसङ्गाद्गौरीजातकोक्तनक्षत्रायुरानयनमाह—

परमायुः प्रमाणेन गुणयेद्गतनाडिकाः ।
नक्षत्रस्य हरेद्भागं नवत्याप्तं विशोधयेत् ॥
परमा षि पुंसश्च शेषमायुः स्फुटं भवेत् ।

भाषा—परमायु प्रमाण (१२०) से भयात को गुणा करके उसमें नव्वे का भाग देवे जो लब्धि आवे उसको परमायुके संख्या (१२०) में घटावे शेष स्फुटायु होती है।

उदाहरण—जैसे पूर्वोक्त उदाहरण में भयात २५।२८ इतना है। इसको एक जातीय किया तो घटी जातीय भयात $\frac{१५२८}{६०}$, इतना हुआ। इसक १२० से गुणाकर नव्वे का भाग दिया तो ऐसा स्वरूप हुआ= $\frac{१५२८ \times १२०}{६० \times ९०}$ =

$\frac{१५२६ \times ४}{६० \times ३} = \frac{१५२६}{१५ \times ३} = \frac{१५२६}{४५}$ = लब्धवर्षादिमान = ३३।११।२२, इसको १२० में घटाया तो स्फुट वर्षादि नक्षत्रायु ८६।००।८ इतना हुआ।

इत्यायुर्दायाध्यायस्तृतीयः।

## अथ दशाफलाध्यायः।

अथ दशाफलमाह—

न दिशेयुर्ग्रहाः सर्वे स्वदशासु स्वभुक्तिषु।
शुभाशुभफलं नृणामात्मभावानुरूपतः॥ १॥
आत्मसम्बन्धिनो ये च ये वा निजसधर्मिणः।
तेषामन्तर्दशास्वेव दिशन्ति स्वदशाफलम्॥ २॥

अ०—सर्वे ग्रहाः स्वदशासु स्वभुक्तिषु आत्मभावानुरूपतः शुभाशुभफलं न दिशेयुः॥ १॥

आत्मसम्बन्धिनः ये वा निजसधर्मिणः ये च तेषां अन्तर्दशासु एव स्वदशाफलं दिशन्ति॥ २॥

सु०—न दिशेयुरिति। सर्वे सकलाः, ग्रहाः सूर्यादयः, स्वदशासु षड्वादि रूपासु, स्वभुक्तिषु स्वान्तर्दशासु, आत्मभावानुरूपतः आत्मनो यो भावः स्वभाव-स्तदनुरूपतस्तदनुसारतः, नृणां मनुष्याणां, शुभाशुभफलं न दिशेयुः न दद्युः, तस्य ग्रहस्य यः स्वभावस्तथाफलं न दद्युस्ततोऽल्प दद्युरेव स्वान्तर्दशायामन्यफलस्या-नवकाशादित्यर्थः॥ १॥

आत्मसम्बन्धिनः आत्मनः स्वस्य सम्बन्धिनः सहावस्थानादिसम्बन्धचतुष्ट-येन समन्विताः, ये ग्रहाः, निजसधर्मिणः समानोधर्मः सधर्मः सधर्म एषामस्तीति सधर्मिणः निजेनात्मना सधर्मिण इति निजसधर्मिणः, ये च ग्रहाः, तेषां ग्रहाणां, अन्तर्दशासु स्वदशायामेव, स्वदशाफलं दिशन्ति॥ २॥

भाषा—सब ग्रह अपनी दशामें जो अपनी अन्तर्दशा उसमें अपना स्वभावानु-रूप शुभ वा अशुभ फल मनुष्योंको विशेष रूपसे नहीं देते हैं, किन्तु सामान्य रूपसे शुभ वा अशुभ फल देते हैं॥ १॥

परञ्च जो ग्रह अपना सम्बन्धी हो अथवा सधर्मी हो उसकी अन्तर्दशामें अपनी दशामें दशाफल विशेष रूपसे देते हैं ॥ १ ॥

अथात्मसम्बन्धिनां सधर्मिणां च ग्रहाणामभावे फलकल्पनामाह—

इतरेषां दशानाथविरुद्धफलदायिनाम् ।
तत्तत्फलानुगुण्येन फलान्यूह्यानि सूरिभिः ॥ ३ ॥

अ०—सूरभिः दशानाथविरुद्धफलदायिनां इतरेषां तत्तत्फलानुगुण्येन फलानि ऊह्यानि ॥ ३ ॥

सु०—इतरेषामिति । सूरिभिः पण्डितैः, दशानाथविरुद्धफलदायिनां दशायाः पाकस्य यो नाथः स्वामी तस्य विरुद्धं यत्फलं तद् दशानाथविरुद्धफलं तद्दातुं शीलं येषां ते दशानाथविरुद्धफलदायिनस्तेषां, इतरेषां स्वसम्बन्धसमानधर्मरहितानां ग्रहाणां, तत्तत्फलानुगुण्येन तस्य तस्य दशान्तर्दशास्वामिनोः फलानां आनुगुण्येन अनुगुणस्य भावः। आनुगुण्यं गुणसाम्यं तेन, फलानि दशाफलानि, ऊह्यानि प्रकल्पनीयानि । अथात्र विशेषः—ग्रहा द्विधा भवन्ति तत्रैके सम्बन्धिनोऽन्येऽसम्बन्धिन इति । तेऽपि षड्विधा भवन्ति । सम्बन्धिनः सधर्मिणः, सम्बन्धिनो विरुद्धधर्मिणः, सम्बन्धिनोऽनुभयधर्मिणः, असम्बन्धिनः सधर्मिणः, असम्बन्धिनोविरुद्धधर्मिणः, असम्बन्धिनोऽनुभयधर्मिण इति । तत्र ये सम्बन्धिनः सधर्मिणश्च सन्ति तेषां फलं सर्वथा उत्तममेव स्यात् । तेभ्यो न्यूनं फलं सम्बन्धिनामनुभयधर्मिणां, तेभ्योऽपि न्यूनं फलं सम्बन्धिनां विरुद्धधर्मिणाम् । एवमग्रेऽपि फलमूह्यं किं लेखबाहुल्येनेति ॥ ३ ॥

भाषा—दशा स्वामीके सम्बन्धादिसे वर्जित इसके विरुद्ध फलदेने वाले ग्रहों की अन्तर्दशामें दोनों फलोंके मिलानसे बुद्धिमानोंको दशा फल कल्पना करना चाहिये ॥ ३ ॥

अथात्र विशेषमाह—

स्वदशायां त्रिकोणेशभुक्तौ केन्द्रपतिः शुभम् ।
दिशेत्सोऽपि तथा नोचेदसम्बन्धेन पापकृत् ॥ ४ ॥

अ०—( सति सम्बन्धे ) केन्द्रपतिः स्वदशायां त्रिकोणेशभुक्तौ शुभं दिशेत्, सोऽपि तथा, नोचेत् असम्बन्धेन पापकृत् ( भवति ) ॥ ४ ॥

सु०—स्वदशायामिति। सति सम्बन्धे, केन्द्रपतिः लग्नचतुर्थसप्तमदशमभवन-स्वामी, स्वदशायां निजमहादशायां, त्रिकोणेशभुक्तौ त्रिकोणपतेरन्तर्दशायां, शुभं शुभफलं दिशेत् दद्यात्। सोऽपि त्रिकोणाधीशोऽपि तथा पूर्ववत्फलं दिशेत् (अर्थात् स्वमहादशायां केन्द्राधीशान्तर्दशायां शुभं दिशेत्), नोचेत् सम्बन्धाभावश्चेत्, तदा असम्बन्धेन सम्बन्धरहितेन, पापकृत् अशुभकृद्भवतीति शेषः ॥ ४ ॥

भाषा—सम्बन्ध रहनेसे केन्द्रपति अपनी दशामें और त्रिकोणेश की अन्तर्दशा में शुभ फल देता है। वैसे ही त्रिकोणेश अपनी दशामें और केन्द्राधिप की अन्तर्दशामें शुभफल देता है। यदि सम्बन्ध न हो तो सम्बन्ध न होनेके कारण केन्द्रेश अपनी दशामें त्रिकोणेश की अन्तर्दशामें और त्रिकोणेश अपनी दशामें केन्द्रेशकी अन्तर्दशामें पाप फलको देता है ॥ ४ ॥

अथ राजयोगारम्भकालमाह—

**आरम्भो राजयोगस्य भवेन्मारकभुक्तिषु।**
**प्रथयन्ति तमारभ्य क्रमशः पापभुक्तयः ॥ ५ ॥**

अ०—मारकभुक्तिषु राजयोगस्य (यदि) आरम्भः (भवेत्तदा) पापभुक्तयः तम् आरभ्य क्रमशः प्रथयन्ति ॥ ५ ॥

सु०—आरम्भ इति। मारकभुक्तिषु मारकग्रहान्तर्दशासु, राजयोगस्य आरम्भः प्रारम्भः, यदि भवेत्तदा, पापभुक्तयः पापग्रहान्तर्दशाः, तं राजयोगम्, आरभ्य, क्रमशः, प्रथयन्ति विस्तारयन्ति ॥ ५ ॥

भाषा—अगर योगकारी ग्रह की दशामें उसके सम्बन्धी मारक ग्रहकी अन्तर्दशामें राजयोगका प्रारम्भ हो तो पापी मारक ग्रहकी अन्तर्दशा उस राजयोग को प्रारम्भ करके धीरेसे बढ़ाती है ॥ ५ ॥

**तत्सम्बन्धिशुभानां च तथा पुनरसंयुजाम्।**
**शुभानां तु समत्वेन संयोगो योगकारिणाम् ॥ ६ ॥**

अ०—तथा च तत्सम्बन्धिशुभानां पुनः असंयुजां योगकारिणां शुभानां तु संयोगः समत्वेन स्यात् ॥ ६ ॥

सु०—तत्सम्बन्धीति। तथाच तत्सम्बन्धिशुभानां (तत्तस्य राजयोग-कारकग्रहाणां सम्बन्धिनः सहावस्थानादिसम्बन्धचतुष्टयान्यतमसम्बन्धविशिष्टा ये शुभग्रहास्तेषां) राजयोगकारकसम्बन्धिशुभग्रहाणां, पुनः असंयुजां सम्ब-

न्धहीनानां, योगकारिणां योगसम्पादयितॄणां, शुभानां शुभग्रहाणां, तु संयोगः दशान्तर्दशासंयोगः, समत्वेन समभावेन ( नात्यपकर्षेण नात्युत्कर्षेण इति ), फलं प्रथयन्तीति पूर्वश्लोकेन सम्बन्धः। अत्रायमाशयः-योगकारकग्रहाणां महादशासु तत्सम्बन्धिशुभग्रहाणामन्तर्दशासु तथा योगकारकग्रहाणां महादशासु तदसम्बन्धिशुभग्रहान्तर्दशासु मध्यमरूपेण फलं लभ्यत इति ॥ ६ ॥

भाषा—योगकारी ग्रहोंके दशामे, तत्सम्बन्धी शुभ ग्रहों की अन्तर्दशा में, और योगकारी ग्रहोंके दशामें उनके असम्बन्धी ग्रहोंके अन्तर्दशोमें मध्यम रूपसे फल होता है ॥ ६ ॥

अथात्रैव विशेषमाह--

शुभस्यास्य प्रसक्तस्य दशायां योगकारकाः।
स्वभुक्तिषु प्रयच्छन्ति कुत्रचिद्योगजं फलम् ॥ ७ ॥

अ०—प्रसक्तस्य अस्य शुभस्य दशायां योगकारकाः ( ग्रहाः ) स्वभुक्तिषु कुत्रचित् योगजं फलं प्रयच्छन्ति ॥ ७ ॥

सु०--शुभस्यास्येति। प्रसक्तस्य सम्बन्धविशिष्टस्य अस्य योगकारकस्य, शुभस्य शुभग्रहस्य, दशायां महादशायां, योगकारकाः योगकारकग्रहाः, स्वभुक्तिषु निजान्तर्दशासु, कुत्रचित् कदाचित्, योगजं राजयोगसमुद्भवं, फलं, प्रयच्छन्ति ददति ॥ ७ ॥

भाषा—योगकारी ग्रह आत्मसम्बन्धी शुभग्रहकी महादशामें अपनी अन्तर्दशा में कहीं कहीं योगज शुभ फल देते हैं ॥ ७ ॥

अथ राहुकेत्वोर्विषये विशेषमाह--

तमोग्रहौ शुभारूढावसम्बन्धेन केनचित्।
अन्तर्दशानुसारेण भवेतां योगकारकौ ॥ ८ ॥

अ०--तमोग्रहौ शुभारूढौ ( स्यातां तदा ) केनचित् असम्बन्धेन अन्तर्दशानुसारेण योगकारकौ भवेताम् ॥ ८ ॥

सु०--तमोग्रहाविति। तमोग्रहौ राहुकेतू, शुभारूढौ शुभस्थानं गतौ, त्रिकोणस्थितौ ) स्यातां, तदा, केनचित् योगकारकग्रहेण, असम्बन्धेन सम्बन्धरहितेन, अन्तर्दशानुसारेण योगकारिमहादशायां निजान्तर्दशायां योगकारकौ योगफलदायकौ, भवेताम् ॥ ८ ॥

भाषा—अगर राहु केतु त्रिकोणमें स्थित हो तो किसी ग्रहसे सम्बन्ध न होने पर भी योगकारी ग्रहकी दशामें अपनी अन्तर्दशामें शुभ फलको देते है ॥ ८ ॥

इति दशाफलाध्यायश्चतुर्थः ।

## अथ मिश्रकाध्यायः ।

अथ पापानां दशेशानां भुक्तिविशेषमाह—

पापा यदि दशानाथाः शुभानां तदसंयुजाम् ।
भुक्तयः पापफलदास्तत्संयुक् शुभभुक्तयः ॥ १ ॥
भवन्ति मिश्रफलदा भुक्तयो योगकारिणाम् ।
अत्यन्तपापफलदा भवन्ति तदसंयुजाम् ॥ २ ॥

अ०—यदि दशानाथाः पापाः स्युस्तदा तदसंयुजां शुभानां भुक्तयः पापफलदाः भवन्ति, तत्संयुक्शुभभुक्तयः मिश्रफलदाः भवन्ति, तदसंयुजां योगकारिणां भुक्तयस्तु अत्यन्तपापफलदाः भवन्ति ॥

सु०—पापा इति । यदि दशानाथाः दशेश्वराः, पापा अशुभग्रहाः स्युस्तदा, तदसंयुजां दशाधिपसम्बन्धरहितानां, शुभानां शुभग्रहाणां, भुक्तयः अन्तर्दशाः, पापफलदाः अनिष्टफलप्रदाः, भवन्ति । तत्संयुक्शुभभुक्तयः दशाधिपसम्बन्धिशुभग्रहान्तर्दशाः, मिश्रफलदा मिश्रं शुभाशुभं फलं ददतीति मिश्रफलदा भवन्ति, तथा तदसंयुजां तत्सम्बन्धरहितानां योगकारिणां भुक्तयः अन्तर्दशाः अत्यन्तपापफलदाः अतिशयेनानिष्टफलप्रदाः भवन्ति ॥ १-२ ॥

भाषा—यदि महादशाके स्वामी पापग्रह हो तो उससे नहीं सम्बन्ध करने वाले शुभ ग्रहकी अन्तर्दशा पाप फलको ही देती है । और उसके सम्बन्धी शुभग्रहकी अन्तर्दशा शुभाशुभ दोनों फल देती है । और पापी दशानाथके असम्बन्धी योगकारक ग्रहोंकी अन्तर्दशा अतिशय पाप फल देती है ॥ १-२ ॥

अथ मारकस्य भुक्तिवशान्मारकत्वमाह—

सत्यपि स्वेन सम्बन्धे न हन्ति शुभभुक्तिषु ।
हन्ति सत्यप्यसम्बन्धे मारकः पापभुक्तिषु ॥ ३ ॥

अ०—मारकः स्वेन सम्बन्धे सति अपि शुभभुक्तिषु न हन्ति। सति अपि असम्बन्धे पापभुक्तिषु हन्ति ॥ ३ ॥

सु०—सत्यपीति। मारको मारकग्रहः, स्वेन आत्मना, सम्बन्धे सत्यपि, शुभभुक्तिषु शुभग्रहान्तर्दशासु, न हन्ति न मारयति। सत्यपि असम्बन्धे सम्बन्धाभावे, पापभुक्तिषु पापान्तर्दशासु, हन्ति मारयति ॥ ३ ॥

भाषा—अपना सम्बन्ध हो तो भी मारकग्रह शुभ ग्रहोंकी अन्तर्दशाओंमें नहीं मारता है। यदि अपना सम्बन्ध न भी हो पर पापग्रहोंकी अन्तर्दशा हो तो मारक ग्रह मारता है ॥ ३ ॥

अथ शनिभार्गवयोर्भुक्तिव्यत्ययेन शुभाशुभफलप्रदत्वमाह—

परस्परदशायां स्वभुक्तौ सूर्यजभार्गवौ।
व्यत्ययेन विशेषेण प्रदिशेतां शुभाशुभम् ॥ ४ ॥

अ०—सूर्यजभार्गवौ परस्परदशायां स्वभुक्तौ व्यत्ययेन विशेषेण शुभाशुभं प्रदिशेताम् ॥ ४ ॥

सु०—परस्परेति। सूर्यजभार्गवौ शनिशुक्रौ, परस्परदशायां परस्परस्य महादशायां, ( शुक्रदशायां शनिः, शनिदशायां शुक्रः ) स्वभुक्तौ स्वान्तर्दशायां, व्यत्ययेन वैपरीत्येन, ( शुक्रफलं शनिः, शनिफलं शुक्र इति ), विशेषेण शुभाशुभं शुभमशुभञ्च फलं, प्रदिशेताम् प्रयच्छेताम् ॥ ४ ॥

भाषा—शनि और शुक्र परस्पर दशा में अपनी अपनी अन्तर्दशा आनेपर शुभ और अशुभ फलको व्यत्ययसे विशेष रूपसे देते हैं। अर्थात् शनिकी महादशामें शुक्र अपनी अन्तर्दशा आनेपर शनिकाही विशेष रूपसे अशुभ फल देता है। इसी प्रकार शुक्रकी महादशामें शनिकी अपनी अन्तर्दशा आनेपर शुक्रका शुभ अशुभ फल विशेष रूपसे देता है ॥ ४ ॥

अथ प्रसङ्गाद् ग्रन्थान्तराच्छुभदां दशामाह—

स्वद्वादशांशके लग्ने नाथे वा स्वदृकाणगे।
तस्य भुक्तिं शुभामाहुर्मुनयः कालचिन्तकाः ॥
स्वत्रिंशांशेऽथवा मित्रे त्रिंशांशे वा स्थितो यदि।
तस्य भुक्तिः शुभा प्रोक्ता कालविद्भिर्मनीषिभिः ॥
मित्रक्षेत्रे स्वांशस्थे मित्रस्य द्विरसांशके।
तस्य भुक्तिः शुभा प्रोक्ता कालविद्भिर्मनीषिभिः ॥

बुद्धिक्षेत्रनवांशस्थे पुत्रस्य द्विरसांशके ।
मित्रद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥
तयोः राशिनवांशस्थे धर्मस्य द्विरसांशके।
गुरुद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥
सुखराशिनवांशस्थे वाहनद्विरसांशके ।
सुखद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥
विलग्ननाथस्थितभांशनाथे मित्रांशगे मित्रखगेन दृष्टे ।
सुहृद्द्रेष्काणस्थनवांशके वा तदास्य भुक्तिं शुभदां वदन्ति ॥

अथ दुःखदां दशामाह—

षष्ठाष्टमव्ययेशानां दशाकष्टप्रदायिनी ।
एषा भुक्तिर्हि कष्टा स्यान्मारकस्य दशा यदि ॥
मारकेशेन षष्ठेशे युक्ते लग्नाधिपे यदि ।
तस्य भुक्तौ ज्वरप्राप्तिं प्राहुः कालविदो जनाः ॥
सरोगे सशरीरेशश्चन्द्रषड्वर्गगो यदि ।
जलदोषस्तस्य भुक्तौ स्यादजीर्णो न संशयः ॥
षष्ठेशयुतलग्नेशो बुधषड्वर्गगो यदि ।
तस्य भुक्तौ भवेद्वायुर्वातो वा देहजाड्यकृत् ॥
सारिनाथविलग्नेशो गुरुषड्वर्गगो यदि ।
तस्य भुक्तौ भवेद्रोगः पीडा वा ब्राह्मणेन तु ॥
नक्षत्रेशो विलग्नेशो भृगुषड्वर्गगो यदि ।
तस्य भुक्तौ भवेत्पीडा रोगः स्त्रीसङ्गमेन च ॥
सरोगे सविलग्नेशः शनिषड्वर्गगो यदि ।
तस्य भुक्तौ भवेद्वातः सन्निपातोऽथवा नृणाम् ॥
लग्नेशरोगेशकयोर्भवेन्मारकभुक्तिषु ।
मृत्यौ स्थितैः सह्निकमन्दकेतुभिर्मनो हि कासश्वासविपुचिकाभिः ।
रोगो नराणामथ तस्य भुक्तौ भवेद्यदा मारकसंयुतिश्च ॥
केन्द्राधीश्वरकोणनायकदशाश्चान्तर्दशाः शोभनाः ।
सामान्याश्च धनत्रिलाभभवनाधीशग्रहाणां दशाः ।

षष्ठाष्टव्ययभावनायकदशाः कष्टा भवेयुः सदा ।
नेतुर्लग्नमवेक्ष्य तत्तदधिपात्तत्तद्दशासु क्विषु ॥ स्पष्टम् ।

अत्र विशेषमाह—

शीर्षोदयगतः खेटः पाकादौ फलदो भवेत् ।
पृष्ठोदयस्थः पाकान्ते सदा चोभयराशिगः ॥

अथ विख्यातिकारकराजयोगमाह—

**कर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ।**
**राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ॥ ५ ॥**

अ०—कर्मलग्नाधिनेतारौ अन्योन्याश्रयसंस्थितौ ( यदि तदा ) राजयोगौ इति प्रोक्तं, (तथा सति जातः) विख्यातो विजयी भवेत् ॥५॥

सु०—कर्मलग्नाधीति । कर्मलग्नाधिनेतारौ लग्नदशमाधीशौ, अन्योन्याश्रयसंस्थितौ अन्योन्यस्य परस्परस्य आश्रयः स्थानं तत्र संस्थितौ, कर्मेशो लग्नस्थाने, लग्नेशः कर्मस्थाने स्थितो यदि स्यात्तदा तौ राजयोगौ राजयोगकारकौ स्तः । अस्मिन् योगे जातः विख्यातः विशिष्टख्यातिमान्, विजयी संग्रामविवादादिषु विजयशाली भवेदिति ॥ ५ ॥

भाषा— दशम स्थान का स्वामी और लग्न का स्वामी दोनों परस्पर स्थान में संस्थित हो तो राजयोग होता है, इसमें उत्पन्न होने वाला विख्यात और विजयी होता है ॥ ५ ॥

अथ राजयोगान्तरमाह—

**धर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ।**
**राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ॥ ६ ॥**

अ०—धर्मलग्नाधिनेतारौ अन्योन्याश्रयसंस्थितौ ( यदि तदा ) राजयोगौ इति प्रोक्तं, ( तथा सति जातः ) विख्यातः विजयी ( च ) भवेत् ॥ ६ ॥

सु०—धर्मलग्नाधीति । धर्मलग्नाधिनेतारौ नवमेशलग्नेशौ, अन्योन्याश्रय-संस्थितौ ( धर्मेशः कर्मस्थाने कर्मेशो धर्मस्थान इति ) वा उभौ मिलित्वैकत्र संस्थौ यदि स्यातां, तदा तौ राजयोगकारकाविति प्रोक्तं शास्त्रे प्रतिपादितम्, अस्मिन् योगेऽपि जातः विख्यातो विजयी भवेदिति ॥ ६ ॥

भाषा—धर्मेश और लग्नेश परस्पर स्थानमें हो अर्थात नवमेश लग्नमें और लग्नेश नवम भवनमें हो तो राजयोग होता है। इसमें उत्पन्न मनुष्य विख्यात और विजयपाने वाला होता है ॥ ६ ॥

अथैवमन्येऽपि योगा ग्रन्थान्तरादाकृष्य लिख्यन्ते—

लग्नाधीशेऽर्थगेचेद्धनभवनपतौ लग्नयातेऽर्थवान्स्यात्।
बुद्ध्याचारप्रवीणः परमसुकृतकृत्सारभृद्भोगशीलः ॥
भ्रातृस्थानेऽगनाथे सहजभवनपे लग्नयातेऽल्पशक्तिः।
सद्बन्धू राजपूज्यः कुलजनसुखदो मातृपक्षेण युक्तः ॥

भाषा—अगर धनभावमें लग्नेश और लग्नमें धनभाव का स्वामी हो तो धनवान्, बुद्धिमान्, आचारमें प्रवीण, श्रेष्ठपुण्य करने वाला, बलवान् और भोग करने वाला होता है। अगर तृतीय भाव में लग्नेश और तृतीयेश लग्नमें हो तो थोड़ाबल, श्रेष्ठ बन्धुओं से युक्त, राजपूज्य, कुलजन को सुख देने वाला और मातृपक्षसे युक्त होता है।

तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे स्यात् क्षमावान्
तातान्नाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः।
लग्नस्थे सूनुनाथे तनुजपदगते लग्ननाथे मनस्वी
विद्यालङ्कारयुक्तो निजकुलविदितो ज्ञानवान्मानसक्तः ॥

भाषा—अगर लग्नेश चतुर्थभवनमें लग्नमें चतुर्थेश हो तो क्षमावान्, पिता की आज्ञा करने वाला, राजकार्यमे निपुण बुद्धिवाला, सज्जनगुरुवाला और अपने पक्षसे युक्त होता है। यदि पञ्चमभावमें लग्नेश और लग्नमें पञ्चमेश हो तो मनस्वी, विद्यारूप भूषणसे युक्त, अपने कुलमें विख्यात, ज्ञानवान् और अभिमानी होता है।

षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे व्याधिहीनः
नित्यं द्रोहादिसक्तो वपुषिसबलवान् द्रव्यवान् संग्रही स्यात्।
मूर्तीशे कामयाते मदनसदनपे मूर्तिगे तातसेवी
लोलस्वान्तोऽगनायां भवति हि मनुजः सेवकः शालकस्य ॥

भाषा—यदि षष्ठभावमें लग्नेश और षष्ठेश लग्नमें हो तो व्याधिहीन, सर्वदा विरोध करने वाला, धनवान् और संग्रह करने वाला होता है। यदि लग्नेश सप्तम भावमें और सप्तमेश लग्नमें हो तो पिताकी सेवा करने वाला, स्त्रीमें चञ्चल चित्त वाला और साले का सेवक होता है।

अङ्गेशे रन्ध्रयाते निधनगृहपतावङ्गगे द्यूतबुद्धिः
शूरश्चौर्यादिसक्तो निधनपदमियाद्भूपतेर्लोकतो वा ।
देहाधीशे शुभस्थे शुभभवनपतौ देहसंस्थे विदेशी
धर्मासक्तो नितान्तं सुरगुरुभजने तत्परो राजमान्यः ॥

भाषा—अष्टमस्थानमें लग्नेश और लग्नमें अष्टमेश होतो जातक जूआ खेलने वाला, शूर, चोरी आदिके काम करने वाला, राजासे वा लोगों से मृत्यु पानेवाला होता है। अगर लग्नेश नवम स्थानमें और नवमेश लग्नमें हो तो विदेशमें रहनेवाला, धर्ममें आसक्त, देवता और गुरुकी सेवा करनेमें आसक्त और राजमान्य होता है।

कर्मस्थे लग्ननाथे गगनभवनपे लग्नगे भूपतिः स्यात्
ख्यातो लाभे च रूपे गुरुभजनरतो लोलुपो द्रव्यनाथः ।
लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे सुकर्मा
दीर्घायुः क्षोणिनाथः शुभविभवयुतः कोविदो मानवः स्यात् ॥

भाषा—अगर दशमभवनमें लग्नेश और लग्नमें दशमेश होतो राजा, लाभ और रूपमें प्रसिद्ध, गुरुकी सेवामें रत, लोलुप और द्रव्याधीश होता है। अगर लग्नमें एकादशेश और एकादशमें लग्नेश हो तो सुकर्म करने वाला, दीर्घायु, राजा, सुन्दर सम्पत्ति से युक्त और पण्डित मनुष्य होता है।

लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सर्वशत्रु-
र्बुद्ध्या हीनो नितान्तं कृपणतरमतिर्द्रव्यनाशी विलोलः ।
इत्थं तातादिकानामपि जनुषि तथा खेचराणां हि योगा-
द्वाच्यं होरागमज्ञैस्तदनु तनुपयुग्भार्गवे राजपूज्यः ॥

भाषा—यदि बारहवे स्थानमें लग्नेश और लग्नमें द्वादशेश हो तो सब जनोंका शत्रु, बुद्धिसे हीन, अत्यन्त कृपण बुद्धि वाला, द्रव्य का नाश करने वाला, और चञ्चल, होता है। इसी प्रकार जन्मसमयमें ग्रहोंके योगोंसे जातकके पिता माता इत्यादिके द्वारा शास्त्रज्ञको फलादेश करना चाहिये।

सुविदित "दरभङ्गा"ख्ये प्रान्ते पत्रालये "बहेड़ा" ख्ये ।
"जरिसो" नाम्ना ख्यात नगरं भूदेवावलिसंवलितम् ॥
अकरोत्तत्र निवासी श्रीमद् "बलदेव"शर्म्मणस्तनयः ।
श्री "अच्युतादिनन्दः" पाराशर्य्यर्थटीकनं द्विविधम् ॥

इत्युडुदायप्रदीपः समाप्तः ।

---

श्रीगणेशाय नमः ।

# अथ मध्यपाराशरी

## तत्र प्रथमः परिच्छेदः ।

अथ मङ्गलाचरणम्—

पराशरमुनिं नत्वा तस्य होरां निरीक्ष्य च ।
वक्ष्येऽप्युडुदशामार्गं पूर्वशास्त्रानुसारतः ॥ १ ॥

अथ टीकाकर्तृमङ्गलाचरणम्—

वन्दामहे सुकमलासनवर्तमानां वाग्देवताममलवाग्विभवप्रदात्रीम् ।
वृन्दारकादिपरिवन्द्यपदारविन्दां श्रीशारदामविरतं भुवनैकसाराम् ॥

भाषा—पराशरमुनिको नमस्कार करके उनका किया हुआ फलित शास्त्रको देखकर प्राचीन शास्त्रके अनुसार नक्षत्रदशाके मार्गको मैं कहता हूं ॥ १ ॥

अथ ग्रहाणां राशीनां च कर्तव्यतामाह—

आदित्यप्रमुखाः खेटास्तथा मेषादिराशयः ।
लोकस्यैवोपकारत्वं कर्तुमर्हन्ति सर्वदा ॥ २ ॥

भाषा—रव्यादिग्रह और मेषादि राशि सदा लोगों के उपकार करनेके लिये हैं ॥ २ ॥

अथ धनस्थानं सुखस्थानञ्चाह—

प्रथमं नवमं चैव धनमित्युच्यते बुधैः ।
चतुर्थं दशमं प्रोक्तं सुखमेव मनीषिभिः ॥ ३ ॥

भाषा—पण्डित लोग प्रथम और नवम स्थानको धन स्थान कहते हैं। तथा चतुर्थ और दशम स्थानको सुख कहते हैं ॥ ३ ॥

अथायुःस्थानं मारकस्थानञ्चाह—

अष्टमं ह्यायुषः स्थानमष्टमादष्टमं च यत् ।
तयोरपि व्ययस्थानं मारकस्थानमुच्यते ॥ ४ ॥

भाषा—व्याख्यात हो है ॥ ४ ॥

अत्र विशेषमाह—

चन्द्रभानू विना सर्वे मारका मारकाधिपाः ।
षष्ठाष्टमव्ययेशास्तु राहुकेतू तथैव च ॥ ५ ॥

भाषा—चन्द्रमा और सूर्यको छोड़कर बाकी सब ग्रह मारक स्थान (२, ७) के स्वामी होनेसे मारक होते हैं। षष्ठेश, अष्टमेश, व्ययेश भी मारक होते हैं। तथा राहु और केतु मारक होते हैं ॥ ५ ॥

अथ खरद्रेष्काणपं वैनाशिकाधिपञ्चाह—

आद्यन्तपौ च विज्ञेयौ चन्द्राक्रान्ताद्ग्रहौ नृणाम् ।
खरद्रेष्काणपश्चैव तथा वैनाशिकाधिपः ॥ ६ ॥

भाषा—चन्द्रमा जिस राशिमें बैठे हो उस राशिसे प्रथम और द्वादश इन दोनों स्थानोंका स्वामी क्रमसे खरद्रेष्काणपति और वैनाशिकाधिप होता है। यथा चन्द्रमा जिस स्थानमें हो उसका स्वामी खरद्रेष्काणपति और चन्द्रमासे बारहवें स्थानका स्वामी वैनाशिकाधिप होता है। इसका प्रयोजन आगे पड़ेगा ॥ ६ ॥

अथ मारके पुनर्विशेषमाह—

विपत्ताराप्रत्यरीशौ वधभेशस्तथैव च ।
मारका जातके प्रोक्ताः कालविद्भिर्मनीषिभिः ॥ ७ ॥

भाषा—विपत् ताराके स्वामी, प्रत्यरि का स्वामी और वध ताराका स्वामी को जातकमें कालको जानने वाले विद्वानोंने मारक कहा है ॥ ७ ॥

अथ राजयोगप्रस्तावनामाह—

अथापरं प्रवक्ष्यामि राजयोगादिसम्भवम् ।
ग्रहाणां स्थानभेदेन राशिदृष्टिवशात्फलम् ॥ ८ ॥

भाषा—इसके बाद ग्रहों के राशिवश से और दृष्टि के वश से जो राज योगादिक, उसके फल को कहते हैं ॥ ८ ॥

अथ जन्मकालिककर्तव्यतामाह—

जन्मकाले तु सम्प्राप्ते लग्नं निश्चित्य पण्डितैः ।
तस्मिन्काले खेचराणां चारं निश्चित्य योजयेत् ॥ ९ ॥

भाषा—पहले जन्मकाल में विद्वानों को लग्नका निश्चय करना चाहिए। और उस काल में ग्रहों के सञ्चार का निश्चय करके रखना चाहिए ॥ ६ ॥

अथ पूर्वमायुःपरीक्षैव कार्येत्यत्र कारणमाह—

पूर्वमायुः परीक्ष्येत पश्चाल्लक्षणमेव च ।
नोचेत्तु लक्षणज्ञाने ह्यायासो व्यर्थमाप्नुयात् ॥ १० ॥

भाषा—पहले आयुर्दाय का निश्चय करके जातकों का लक्षण की परीक्षा करना चाहिए। नहीं तो लक्षणज्ञान में प्रयास करना व्यर्थ हो जायगा। क्योंकि जिसको आयुर्दाय नहीं है, उसको लक्षणज्ञान करने से क्या लाभ ॥ १० ॥

तत आह—

पुनस्तन्वादयो भावाः स्थाप्यास्तेषां शुभाशुभम् ।
लाभं तृतीयं रन्ध्रञ्च शत्रुस्थानं व्ययं तथा ॥ ११॥
एषां योगेन यो भावस्तन्नाशं प्राप्नुयाद् ध्रुवम् ।

भाषा—फिर तन्वादि बारह भावों का आनयन करके स्थापन करे। अब उन भावों का शुभाशुभ कहते हैं। एगारहवे भाव, तृतीय भाव, आठवे भाव, रिपु भाव, व्यय भाव, इन भावों के सम्बन्ध में जो भाव पडे वे सब निश्चय करके नाश को प्राप्त होते हैं ॥ ११½ ॥

चत्वारो राशयो भद्राः केन्द्रकोणशुभावहाः ॥ १२ ॥
तेषां संयोगमात्रेण ह्यशुभोऽपि शुभो भवेत् ।

भाषा—शुभ करने वाले केन्द्र ( ४, १० ) कोण ( ९, ५ ) ये चारो भाव जिस चार राशियों में स्थित होवे वे चारो राशियाँ कल्याणदेने वाली होती हैं॥१२½॥

अथ केन्द्रसंख्यां तच्छुभत्वञ्चाह—

केन्द्राश्चतस्रो विख्याता मुनिभिस्तत्त्वदर्शिभिः ॥ १२ ॥
तेषां मध्ये तु शुभदौ कर्मबन्धू विशेषतः ।

भाषा—तत्त्वदर्शी मुनि लोग चार स्थानों ( १, ४, ७, १० ) का नाम केन्द्र कहते हैं। उन चारों में ( १०, ४ ) ये दोनों अधिक शुभफल दायक हैं ॥ १३½ ॥

अथ योगविभागमाह—

अथ योगविभागन्तु वच्मि पूर्वानुसारतः ॥ १४ ॥
पश्यन्ति सप्तमं सर्वे शनिजीवकुजाः पुनः ।
विशेषतश्च त्रिदशात्रिकोणचतुरष्टमान् ॥ १५ ॥

भाषा—इसका अर्थ पूर्व में स्पष्ट किया गया है ॥ १४, १५ ॥

अथ लक्ष्मीस्थानं विष्णुस्थानञ्चाह—

लक्ष्मीस्थानं त्रिकोणः स्याद्विष्णुस्थानं तु केन्द्रकम् ।
तेषां संयोगमात्रेण चक्रवर्ती नरो भवेत् ॥ १६ ॥

भाषा—त्रिकोण ( ९, ५ ) लक्ष्मी जी का स्थान है, और केन्द्र ( १, ४, ७, १० ) विष्णु का स्थान है, इन दोनों का परस्पर सम्बन्ध होने से मनुष्य चक्रवर्ती राजा होता है ॥ १६ ॥

अथान्यराजयोगमाह—

तपस्थानाधिपो मन्त्रे मन्त्रनाथेऽथवा गुरौ ।
उभावन्योन्यसंदृष्टौ जातश्चेद्बहुराज्यभाक् ॥ १७ ॥

भाषा—तपस्थान ( ९ ) का स्वामी मन्त्र ( पञ्चम ) स्थान में हो, अथवा मन्त्रेश बृहस्पति हो, नववें भाव का स्वामी और गुरु इन दोनों को परस्पर दृष्टि सम्बन्ध होतो बालक बहुत राज्य को भोग करने वाला होता है ॥ १७ ॥

अथ पुनस्तमेवाह—

यत्र कुत्रापि संयुक्तौ तौ चापि समसप्तमौ ।
राजवंशोद्भवो बालो राजा भवति निश्चितम् ॥ १८ ॥

भाषा—किसी भी कुण्डली में पञ्चमेश और बृहस्पति एकट्ठा होकर सप्तम में होतो राजवंश में उत्पन्न बालक निश्चय करके राजा होता है ॥ १८ ॥

अथ राजयोगान्तरमाह—

वाहनेशे तथा माने मानेशे वाहने गते ।
बुद्धिधर्माधिपाभ्यान्तु दृष्टौ चेद्बहुराज्यभाक् ॥ १९ ॥

भाषा—वाहनेश ( चतुर्थेश ) मान ( नवम ) स्थान में और मानेश ( नवमेश ) वाहन ( चतुर्थ ) स्थान में हो, पञ्चमेश और नवमेश से वे दोनों देखे जाते हों तो जातक बहुत राज्य को भोग करने वाला होता है ॥ १९ ॥

अथ विशिष्टराजयोगमाह—

मन्त्रेशकर्मेशसुखेशलग्ननाथास्तथा धर्मपसंयुताश्चेत् ।
नृपोद्भवश्चेद्बहुवारणाश्वैः स्वतेजसा व्याप्तदिगन्तरालम् ॥२०॥

भाषा—मन्त्रेश ( पञ्चमेश ), कर्मेश ( दशमेश ), सुखेश ( चतुर्थेश ), लग्ननाथ ( लग्नकास्वामी ), ये सब नवमेश से अगर संयुक्त होंतो राजकुल में उत्पन्न हुआ बालक बहुत वारण ( हाथी ) अश्व ( घोड़ा ) इत्यादि वाहनों से समन्वित होता है और अपना तेजसे देशान्तर को व्याप्त करता है ॥ २० ॥

पुनस्तमेवाह—

सुखकर्माधिपौ चैव मन्त्रनाथेन संयुतौ ।
धर्मनाथेन संदृष्टौ जातश्चेद्बहुराज्यभाक् ॥ २१ ॥

भाषा—सुखेश और दशमेश पञ्चमेश से संयुत होकर नवमेश से देखा जाता हो तो बालक बहुतराज्यभागी होता है ॥ २१ ॥

पुनस्तमेवान्यथाह—

सुतेश्वरो धर्मपसंयुतश्चेल्लग्नेश्वरेणापि युतो विलग्ने ।
सुखेऽथवा मानगृहेऽथवा स्याद्राज्याभिषिक्तो यदि राजवंश्यः ॥२२॥

भाषा—पञ्चमेश, नवमेश औरलग्नेश से युत हो करलग्न वा चतुर्थस्थान अथवा नवम गृह में हो तो राजवंश में उत्पन्न बालक राज्याधिकारी होता है॥२२॥

इति जरिसो निवास्यच्युतानन्दीयमध्यपाराशरीटीकायां प्रथमः परिच्छेदः ।

---

## अथ द्वितीयः परिच्छेदः।

तत्र धनयोगप्रस्तावनामाह—

अथापरं प्रवक्ष्यामि धनयोगं विशेषतः।

ग्रहाणां स्थानभेदेन राशिदृष्टिवशात्तथा ॥ १ ॥

भाषा—अब इसके बाद विशेष से ग्रहों के स्थान भेद से और दृष्टि के वश से धन योग को कहता हूं ॥ १ ॥

ये ये ग्रहा धर्मपबुद्धिपाभ्यां युक्ताश्च दृष्टाश्च सुखप्रदास्ते।

रन्ध्रेश्वरारिव्ययपैर्युताः स्युः शोकप्रदा मारकनायकैश्च॥२॥

भाषा— जो जो ग्रह नवमेश और पञ्चमेश से युत हों या देखे जाते हों वे सब शुभप्रद होते हैं। और जो जो ग्रह अष्टमेश, षष्ठेश व्ययेश और मारकेश इन सबों से युत हो वे सब शोक देने वाले होते हैं ॥ २ ॥

अथ धनयोगकल्पनायां किञ्चिदाह—

क्रूरसौम्यविभागेन स्वस्थानादिवशात्तथा।

साहचर्याच्च योगानां धनयोगान्प्रकल्पयेत् ॥ ३ ॥

भाषा—पापग्रह और शुभग्रह के विभाग से अपने अपने स्थान के वश से योगों के सम्बन्ध से धनयोग की कल्पना करना चाहिए ॥ ३ ॥

अथ बहुद्रव्यनायकयोगानाह—

धर्मस्थाने गुरुक्षेत्रे गुरुशुक्रयुते तथा।

पञ्चमाधिपयुक्ते वा बहुद्रव्यस्य नायकः ॥ ४ ॥

भाषा— जन्म लग्न से नवम स्थान गुरु के क्षेत्र ( धनु, मीन ) में पड़े, बृहस्पति और शुक्र से युत हो या पञ्चमेश से युत होतो बहुत द्रव्य का नायक होता है ॥ ४ ॥

पञ्चमे सोमजक्षेत्रे तस्मिन् सौम्ययुते यदि।

लाभे सचन्द्रभौमस्तु बहुद्रव्यस्य नायकः ॥ ५ ॥

भाषा—पञ्चमस्थान सोमज ( बुध ) के क्षेत्र ( मिथुन, कन्या ) में पड़े,

उस में शुभग्रह होवे, चन्द्रमा और मङ्गल लाभ स्थान में होवे तो बहुत द्रव्य का नायक होता है ॥ ५ ॥

पञ्चमे तु भृगुक्षेत्रे तस्मिञ्च्छुक्रे ससोमजे।
लाभे शनैश्चरयुते बहुद्रव्यस्य नायकः ॥ ६ ॥

भाषा—पञ्चमस्थान शुक्र के क्षेत्र ( वृष, तुल ) में पड़े, उस में बुध, शुक्र, युत होवे, एकादशस्थान में शनि होवे तो बहुत द्रव्यका नायक होता है ॥६॥

पञ्चमे तु रविक्षेत्रे तास्मिन् रवियुते यदि।
लाभे देवेन्द्रपूज्ये तु बहुद्रव्यस्य नायकः ॥ ७ ॥

भाषा—अगर पञ्चमस्थान रवि क्षेत्र ( सिंह ) में पड़े, उसमें रवि होवे, और बृहस्पति एगारहवे भाव में होवे तो बहुत द्रव्य का नायक होता है ॥ ७ ॥

पञ्चमे तु शनिक्षेत्रे तस्मिन् सूर्यजसंयुते।
लाभेश आत्मजयुते बहुद्रव्यस्य नायकः ॥ ८ ॥

भाषा—पञ्चमस्थान शनिक्षेत्र (मकर, कुम्भ ) में पड़े, उसमें शनि बैठा हो और शनि लाभेश से युत होतो बहुत द्रव्यका स्वामी होता है ॥ ८ ॥

पञ्चमे तु गुरुक्षेत्रे तस्मिन् गुरुयुते यदि।
लाभे सचन्द्रसौम्ये तु बहुद्रव्यस्य नायकः ॥ ९ ॥

भाषा—पञ्चमस्थान अगर गुरु के क्षेत्र ( धनु, मीन ) में पड़े, उसमें गुरु बैठा हो और एगारहवे भाव में चन्द्रमा सहित बुध होतो बहुत द्रव्यका नायक होता है ॥ ९ ॥

पञ्चम तु शशिक्षेत्रे तास्मिन् शशियुते यदि।
लाभे भौमेन संयुक्ते बहुद्रव्यस्य नायकः ॥ १० ॥

भाषा—पञ्चमस्थान चन्द्रमा के क्षेत्र ( कर्क ) में पड़े, उसमें चन्द्रमा हो और एगारहवे भाव मङ्गल से युत होवे तो बहुत द्रव्य का नायक होता है ॥ १० ॥

अथायुतधनान्वितयोगमाह—

भानुक्षेत्रे गते लग्ने तास्मिन् भानौ युते यदि।

यदि भौमेन गुरुणा दृष्टे स्यादयुतैर्धनैः ॥ ११ ॥

भाषा—सूर्यके घर ( सिंह राशी ) लग्न में पडे, उसमें सूर्य बैठा हो, मङ्गल और बृहस्पति इन दोनों से देखा जाता हो तो अयुत प्रमाण ( १००० ) धन ( द्रव्य ) से धनी होता है ॥ ११ ॥

अथ धनयशोर्चितयोगानाह—

चन्द्रक्षेत्रे गते लग्ने तस्मिन् चन्द्रगते यदि ।
जीवभौमयुते दृष्टे जातो धनयशोर्चितः ॥ १२ ॥

भाषा—चन्द्रक्षेत्र ( कर्क ) गत लग्न हो, उसमें चन्द्रमा बैठा हो, बृहस्पति और मङ्गल से युत हो या देखा जाता होतो बालक धन और यश से पूजित होता है ॥ १२ ॥

भौमक्षेत्रे गते लग्ने तस्मिन् भौमेन संयुते ।
गुरुचन्द्रयुते दृष्टे जातो धनयशोर्चितः ॥ १३ ॥

भाषा—मङ्गल के क्षेत्र ( मेष, वृश्चिक ) लग्न में होवे, उस में मङ्गल होवे तथा बृहस्पति और चन्द्रमा से युत या देखा जाता हो तो जातक धन यश से पूजित होता है ॥ १३ ॥

बुधक्षेत्रगते लग्ने तस्मिन् सौम्ययुते यदि ।
गुरुचन्द्रयुते दृष्टे जातो धनयशोर्चितः ॥ १४ ॥

भाषा—बुधके घर ( मिथुन, कन्या ) में लग्न हो, उस में बुध हो, और बृहस्पति, चन्द्रमा से युत हो या देखा जाता हो तो जातक धन यश से पूजित होता है ॥ १४ ॥

अथ धनयशोऽन्वितयोगानाह—

शुक्रक्षेत्रगते लग्ने तस्मिञ्छुक्रेण संयुते ।
शनिसौम्ययुते दृष्टे जातो धनयशोऽन्वितः ॥ १५ ॥

भाषा—शुक्रक्षेत्र ( वृष, तुला ) लग्न में हो, उस में शुक्र बैठा हो, शनि और बुध से युत हो या देखा जाता होतो जातक धन यश से युत होता है ॥ १५ ॥

शनिक्षेत्रगते लग्ने तस्मिञ्छनियुते यदि ।
बुधशुक्रयुते दृष्टे जातो धनयशोऽन्वितः ॥ १६ ॥

भाषा—शनि क्षेत्र ( मकर, कुम्भ ) लग्न में हो, उस में शनि बैठा हो, बुध, शुक्र, से युत या देखा जाता हो तो जातक धन यश से युत होता है ॥१६॥

इति जरिसो निवास्यच्युतानन्दीयमध्यपाराशरीटीकायां द्वितीयः परिच्छेदः ।

---

## अथ तृतीयः परिच्छेदः ।

**अथ दरिद्रयोगप्रस्तावनामाह—**

अथापरं प्रवक्ष्यामि दारिद्र्यं दुःखकारणम् ।
क्रूरखेटादियोगैश्च दारिद्र्यं सम्भवेन्नृणाम् ॥ १ ॥

भाषा—अब इसके बाद दुःख के निदान भूत दरिद्र योग को कहता हूं । पापग्रहादि के योग से मनुष्यों को दरिद्र योग होता है ॥ १ ॥

**अथ कष्टदायकग्रहानाह—**

ये ये ग्रहा धर्मपबुद्धिपाभ्यां युक्ता न दृष्टा बहुदुःखदास्ते ।
रन्ध्रेश्वरारिव्ययपैर्युता ये व्ययप्रदा मारकनायकेन ॥ २ ॥

भाषा—जो जो ग्रह नवमेश और पञ्चमेश से न युत हों, न देखे जाते हों वे सब ग्रह बहुत दुःख देने वाले होते हैं । तथा जो जो ग्रह अष्टमेश, रोगेश, व्ययेश और मारकेश से युत हों वे मृत्यु को देने वाले होते हैं ॥ २ ॥

**अथ निधनयोगमाह—**

लग्नाधिपे रिष्फगते रिष्फेशे लग्नमागते ।
मारकेशयुते दृष्टे जातस्य निधनं वदेत् ॥ ३ ॥

भाषा—लग्नेश बारहवे भाव में हो, बारहवे भाव का स्वामी लग्न में हो, मारकेश ( द्वितीयेश, सप्तमेश ) से युत हो या देखा जाता हो तो जातक को निधन ( मरण ) कहना चाहिए ॥ ३ ॥

अथ निर्धनयोगानाह—

लग्नाधिपे शत्रुगृहे गते वा षष्ठेश्वरे लग्नगतेऽथवास्ते ।
विलग्नपे मारकनाथदृष्टे जातो भवेन्निर्धनको मनुष्यः ॥ ४ ॥

भाषा—लग्नेश शत्रुगृह में हो, या षष्ठेश लग्न या सप्तम भवन में हो, लग्नेश मारकेश से देखा जाता हो तो जातक निर्धन होता है ॥ ४ ॥

लग्नेन्दौ केतुसंयुक्ते लग्नेशे निधनं गते ।
मारकेशयुते दृष्टे जातः स्यान्निर्धनो नरः ॥ ५ ॥

भाषा—लग्न, चन्द्रमा केतु से युक्त हो, लग्नेश अष्टम में हो मारकेश से युत या दृष्ट हो तो जातक निर्धन होता है ॥ ५ ॥

अथ राजवंशोद्भवस्यापि निर्धनयोगमाह—

षष्ठाष्टमव्ययगते लग्नेशे पापसंयुते ।
मारकेशयुते दृष्टे राजवंशोऽपि निर्धनः ॥ ६ ॥

भाषा—लग्नेश पापयुत होकर षष्ठ, अष्टम, व्यय इन तीनों स्थानों में से किसी स्थानमें हो मारकेश से युत या देखा जाता हो तो राजवंश में उत्पन्न हुआ भी लड़का निर्धन होता है ॥ ६ ॥

अथ दरिद्रयोगमाह—

विलग्ननाथे रविणा सरिष्फनाथेन युक्ते यदि पापदृष्टे ।
मित्रात्मजे नाथयुतेऽथ दृष्टे शुभैर्न दृष्टे स भवेद्दरिद्रः ॥ ७ ॥

भाषा—रवि और व्ययेश से युत लग्नेश अगर पापग्रह से देखा जाता हो, शनि लग्नेश से युत हो या देखा जाता हो और अन्य किसी भी शुभ ग्रह से न देखा जाता हो तो जातक निर्धन होता है ॥ ७ ॥

अथ निर्धनयोगमाह—

मन्त्रेशो धर्मनाथश्च षष्ठे वा खे स्थितौ क्रमात् ।
दृष्टौ चेन्मारकेशेन जातः स्यान्निर्धनो नरः ॥ ८ ॥

भाषा—पञ्चमेश और नवमेश क्रमसे छठे, दशवे स्थान में हो, अगर मारकेश से देखा जाता हो तो जातक निर्धन होता है ॥ ८ ॥

अथ निर्धनचञ्चलयोगावाह—

यद्भावेशे रन्ध्ररिष्फारिसंस्थे यद्भावस्था रन्ध्ररिष्फारिनाथाः
पापैर्दृष्टा वा युतास्तस्य नाशं दुःखाक्रान्तो निर्धनश्चञ्चलःस्यात्॥९॥

भाषा—जिस भाव का स्वामी आठवे, बारहवे और छठे स्थान में हो और अष्टमेश, व्ययेश और रोगेश जिस भाव में हो, पापग्रह से युत या दृष्ट हो उस भाव का नाश होता है, और जातक दुःख युक्त निर्धन और चञ्चल होता है॥९॥

अथ पुनर्निर्धनयोगानाह—

चन्द्राक्रान्तनवांशेशो मारकेशयुतो यदि ।
मारकस्थानगो वापि जातःस्यान्निर्धनो नरः ॥ १० ॥

भाषा—जिसनवांश में जन्म हो उस नवांश का स्वामी चन्द्रमा से युक्त हो या मारक स्थान ( ७, २ ) में गत हो तो जातक निर्धन होता है ॥ १० ॥

पापग्रहे लग्नगते भाग्यकर्माधिपौ विना ।
मारकेशयुते दृष्टे जातः स्यान्निर्धनो नरः ॥ ११ ॥

भाषा—लग्न में पापग्रह बैठा हो पर वह पापग्रह नवमेश या दशमेश न हो और मारकेश से युत दृष्ट होतो बालक निर्धन होता है ॥ ११ ॥

विलग्नेशनवांशेशो रिष्फषष्ठाष्टगो यदि ।
मारकेशयुतो दृष्टो जातस्यान्निर्धनो नरः ॥ १२ ॥

भाषा—लग्नेश और नवांशेश अगर बारहवे, आठवे, या छठे स्थान में हो मारकेशसे युत हो या देखा जाता होतो जातक निर्धन होता है ॥ १२ ॥

अथ धननाशकमहावित्तकारकयोगावाह—

धने संस्थौ च भौमेन्दू कथितौ धननाशकौ ।
बुधेक्षितौ महावित्तं कुरुतस्तद्गतः शनिः ॥ १३ ॥

भाषा—मङ्गल और चन्द्रमा धन (२) स्थान में हो तो धन नाश करते हैं। यदि धनस्थान गत मङ्गल और चन्द्रमा बुध से देखे जाते हों तो बहुधन देते हैं। धनगत शनि भी बहुत धन देता है ॥ १३ ॥

अथ निःस्वतायोगं महाधनयुतयोगञ्चाह—

निःस्वतां कुरुते तत्र रविर्नित्यं यमेक्षितः ।
महाधनयुतं ख्यातं शन्यदृष्टः करोत्यसौ ॥ १४ ॥

भाषा—धन भाव गत रवि शनि से देखा जाता हो तो जातक को निर्धन करता है। अगर धनगत रवि शनि से न देखा जाता हो तो जातक को बहुत धन से युत, विख्यात करता है ॥ १४ ॥

अथ पुनर्निर्धनयोगमाह—

धनभावगताः सौम्याः कुर्वन्त्येव धनं बहु ।
बुधदृष्टो गुरुस्तत्र निर्धनं कुरुते नरम् ॥ १५ ॥

भाषा—सब शुभग्रह धन भाव में बैठे हों तो जातक को बहुत धन देते हैं। अगर धन भाव गत बृहस्पति, बुध से देखा जाता हो तो मनुष्य को निर्धन करते हैं ॥ १५ ॥

बुधश्चन्द्रेक्षितस्तत्र सर्वस्वं हन्ति निश्चितम् ।
एतद्धि विबुधैश्चिन्त्यं बलाबलविचारतः ॥ १६ ॥

भाषा—धन भाव गत बुध चन्द्रमा से देखा जाता हो तो सब धन को नाश करता है। ग्रहों का बलाबल पहले विचार कर इन योगों का पण्डित विचार करे ॥ १६ ॥

इति जरिसो निवासयच्युतानन्दीयमध्यपाराशरीटीकायां तृतीयः परिच्छेदः ।

## अथ चतुर्थः परिच्छेदः ।

तत्र प्रस्तावनामाह—

वक्ष्येऽहं सारमुद्धृत्य ज्योतिःशास्त्राम्बुधेस्ततः ।
दशाः सौख्यप्रदा नृणां ग्रहाणां दृष्टियोगतः ॥ १ ॥

भाषा—अब हम के बाद ज्योतिःशास्त्र रूपी समुद्र से सार वस्तु को निकाल कर मनुष्यों को ग्रहों के दृष्टि योग से सौख्य प्रदा दशा को कहता हूँ ॥ १ ॥

अथ सूर्यादिमहादशावर्षसङ्ख्यामाह—

तनुनित्यसनादेयास्तया धान्यासटासना।
नरेति संख्या विज्ञेयाः क्रमात्सूर्यादिवत्सराः॥ २॥

भाषा—इस श्लोक से सूर्यादि ग्रहों की महादशा वर्ष संख्या जानने के लिये जैमिनि सूत्र के अनुसार व्यञ्जन वर्णका ही निवेश किये हैं। क, ट, प, य इत्यादि वर्णों से एकादि संख्या ग्रहण करना चाहिए। जैसे क से एक, ख से दो, ग से तीन इत्यादि झ पर्य्यन्त नव संख्या ग्रहण करना चाहिए। इसी तरह ट से एक, ठ से दो, ड से तीन इत्यादि ध पर्य्यन्त नव संख्या, प से म तक एकादि पाँच संख्या और य से ह तक एक से आठ तक संख्या ग्रहण करते हैं। यहाँ न को शून्य और हलन्त व्यञ्जन तथा स्वर को पद्य पूरणार्थ जानना चाहिए।

अतः तनु = ०६, नित्य = १०, सना = ०७, देया = १८, तया = १६, धान्या = १९, सटा = १७, सना = ०७, नर = २० ये सूर्यादि ग्रहों के महादशा वर्ष हैं॥ २॥

अथान्तर्दशानयनमाह—

स्वदशा रामगुणिता तद्दशा गुणिता पुनः।
खरामभागतो लब्धं फलं मासादिकं भवेत्॥ ३॥

भाषा—अपनी दशा को तीन से गुणा कर गुणन फल को जिस ग्रहकी अन्तर्दशा लानी हो उस की अन्तर्दशा से गुणा करे ३० का भाग देवे लब्धि मासादिक अन्तर्दशा होती है॥ ३॥

अन्तर्दशां विनिष्कृष्य स्वदशासंगुण्य यत्नतः।
युगेन विभजेल्लब्धं दिनं तत्तदशाफलम्॥ ४॥
स्वगुणेन हृताल्लब्धमन्तरान्तर्दशा भवेत्।
एवं सूक्ष्मदशां ज्ञात्वा तथा प्राणदशामपि॥ ५॥

भाषा—पूर्व प्रकार से अन्तर्दशा को निकाल कर के दिनात्मक बनावे, उस को अपने अपने महादशा वर्ष से गुणाकर चारका भाग देवे, जो लब्धि आवे

उस में फिर ३० का भाग देने से लब्धि दिनादि अन्तरान्तर्दशा होती है।

इस प्रकार से उपदशा का ज्ञान करके प्राण दशा का ज्ञान करे ॥ ४-५ ॥

अथ दशाफलप्रस्तावनामाह—

आहुः शुभाशुभफलं नृणां कालविदो जनाः ।
एतत्कृते निर्णयिते ह्यायुषो निश्चयो भवेत् ॥ ६ ॥

भाषा—दशा के निर्णय करके काल को जान ने वाले पण्डित लोग मनुष्यों को शुभा शुभ फल को कहते हैं। और इसी निर्णय पर से आयुका भी निश्चय हो जाता है ॥ ६ ॥

अथ दशाफलान्याह—

पञ्चमेशदशायां तु धर्मपस्य दशा तु या ।
अतीव शुभदा प्रोक्ता कालविद्भिर्मुनीश्वरैः ॥ ७ ॥

भाषा—पञ्चमेश की महादशा में नवमेश की अन्तर्दशा अत्यन्त शुभ देने वाली है। ऐसा काल को जान ने वाले मुनीश्वरों ने कहा है ॥ ७ ॥

समन्त्रनाथस्य तपोधिपस्य दशा शुभा राज्यसुतप्रदा स्यात् ।
सकीर्त्तिनाथस्य सुखेश्वरस्य दशा तथा प्राहुरुदारचित्ताः ॥८॥

भाषा—पञ्चमेश से युत नवमेश की महादशा शुभदा और राज्य, पुत्र देने वाली है। तथा पञ्चमेश से युत चतुर्थेश की दशा उसी तरह फल देती है। ऐसा उदार चित्त वाले पण्डितों ने कहा है ॥ ८ ॥

पञ्चमेशेन युक्तस्य ग्रहस्य शुभदा दशा ।
तथा धर्मपयुक्तस्य दशा परमशोभना ॥ ९ ॥

भाषा—पञ्चमाधीश से युत जो ग्रह हो उस की दशा शुभ देने वाली है। इसी तरह नवमेश से युत ग्रह की दशा भी होती है ॥ ९ ॥

पापदृष्टस्य खेटस्य दशा हानिकरा मता ।
शुभयुक्तस्य खेटस्य दशा द्रव्यप्रदा भवेत् ॥ १० ॥

भाषा—पाप ग्रह से जो ग्रह देखा जाता हो उस की दशा हानि करती है। शुभग्रह से युक्त ग्रह की दशा द्रव्य को देती है ॥ १० ॥

सपञ्चमेशलग्नेशदशा राज्यप्रदायिनी।
तथा धर्मपयुक्तस्य लग्नपस्य दशा मता॥ ११॥

भाषा—पञ्चमेश से युक्त लग्नेश की दशा राज्य को देती है। और धर्मेश से युत लग्नेश की भी दशा फल भी इसी तरह पण्डितों ने स्वीकार किया है॥ ११॥

सपञ्चमेशस्य तपोधिपस्य दशा भवेद्राज्यसुखार्थलाभदा।
तथैव मानाधिपसंयुतस्य सुतेश्वरस्यापि दशा शुभा स्यात्॥१२॥

भाषा—पञ्चमेश से युत नवमेश की दशा राज्य, सुख, अर्थ लाभ को देती है। नवमेश से युत पञ्चमेश की दशा भी इसी तरह शुभ करती है॥१२॥

पञ्चमेशेन युक्तस्य मानेशस्य दशा शुभा।
सुखेशसहितस्यापि धर्मेशस्य दशा शुभा॥ १३॥

भाषा—पञ्चमेश से युत नवमेश की दशा शुभ है। और चतुर्थेश से सहित नवमेश की भी दशा शुभ है॥ १३॥

तथा शुभस्थानगमानपस्य तथैव मानार्थसुखप्रदा स्यात्।
दशा नृणां सौख्यकरी भवेद्धि सुखेशयुक्तस्य च मानपस्य॥१४॥

भाषा—नवम भाव स्थित नवमेश की दशा इसी तरह मान, अर्थ और सुख को देती है। चतुर्थेश से युत नवमेश की दशा मनुष्यों को निश्चय कर के सुख देने वाली होती है॥ १४॥

षष्ठस्य सप्तमस्यैको नायको मानराशिगः।
दशा तस्य शुभा ज्ञेया तथा तेन युतस्य च॥ १५॥

भाषा—षष्ठस्थान और सप्तम स्थान इन दोनों में से किसी एक स्थान का स्वामी नवम स्थान में हो तो उसकी दशा भी शुभ होती है। इसी तरह नवमेश से युत षष्ठेश या सप्तमेश होतो फल जानना चाहिए॥ १५॥

एको द्विसप्तमस्थाननायको यदि सौख्यगः।
तेन युक्तदशा ज्ञेया शुभदाऽऽहुर्मनीषिणः॥ १६॥

भाषा—दूसरा और सप्तमस्थान में से किसी एक का स्वामी चतुर्थ भाव में

होकर जिस से युक्त हो उस ग्रह की दशा शुभ देने वाली है। ऐसा महर्षियों ने कहा है ॥ १६ ॥

षष्ठाष्टमव्ययार्थीशाः पञ्चमाधिपसंयुताः ।
तेषां दशा च शुभदा प्रोच्यते कालवित्तमैः ॥ १७ ॥

**भाषा**—षष्ठेश, अष्टमेश और व्ययेश यदि पञ्चमेश से युत हो तो उन की दशा काल को जान ने वाले पण्डितों ने शुभ कही है ॥ १७ ॥

सुखेशो मानभावस्थो मानेशः सुखराशिगः ।
तयोर्दशां शुभमाहुर्ज्यौतिश्शास्त्रविदो जनाः ॥ १८ ॥

**भाषा**—चतुर्थेश दशम भाव में, दशमेश सुखभाव में हो तो इन दोनों की दशा ज्यौतिःशास्त्र को जान ने वाले पण्डित लोग शुभ कहते हैं ॥ १८ ॥

सुखेशमानेशसुतेशधर्मपा एकत्र युक्ता यदि यत्र कुत्र ।
तेषां दशा राज्यफलप्रदास्तैर्युक्तग्रहाणामपिदृग्युतैर्वा ॥ १९ ॥

**भाषा**—चतुर्थेश, दशमेश, पञ्चमेश और नवमेश जहां कहीं सब एक साथ बैठे हों तो इन सब ग्रहों की दशा राज्यफल को देती है। और इन चारो ग्रहों से युक्त या देखे जाते जो ग्रह हों उनकी दशा भी शुभ है ॥ १९ ॥

वाहनस्थानसंयुक्तमन्त्रनाथदशा शुभा ।
सुखराशिस्थकर्मेशदशा राज्यप्रदायिनी ॥ २० ॥

**भाषा**—पञ्चमेश चतुर्थभाव में हो तो उसकी दशा शुभ है। और दशमेश चतुर्थभाव में हो तो उसकी दशा राज्य को देती है ॥ २० ॥

ताभ्यां युक्तस्य खेटस्य दृष्टियुक्तस्य चैतयोः ।
राज्यप्रदां दशामाहुर्विद्वांसो दैवचिन्तकाः ॥ २१ ॥

**भाषा**—कर्मेश और मन्त्रेश इन दोनों से जो ग्रह युत और जो ग्रह देखा जाता हो उन दोनों की दशा राज्य देने वाली है। ऐसा दैव को जानने वाले पण्डितों ने कहा है ॥ २१ ॥

कर्मस्थानस्थबुद्धीशदशा सम्पत्करी भवेत् ।

मानस्थिततपोधीशदशा राज्यप्रदायिनी ॥ २२ ॥

भाषा—दशम भाव में स्थित पञ्चमेश की दशा सम्पत्ति को करती है। दशम भावस्थित नवमेश की दशा राज्य को देती है ॥ २२ ॥

इति जरिसो निवास्यच्युतानन्दविरचितायां मध्यगराशरीटीकायां चतुर्थः परिच्छेदः।

## अथ पञ्चमपरिच्छेदः ।

अथ पञ्चविधां दशामाह—

अथ वक्ष्ये खगेन्द्राणां भुक्तिं पञ्चविधामहम् ।
दशा चान्तर्दशा चैव ततोऽपि विदशा तथा ॥ १ ॥

भाषा—स्पष्टम् ॥ १ ॥

अथ दशाशुभाशुभत्वमाह—

सूक्ष्मभुक्तिः प्राणदशा एवं पञ्चदशाः स्मृताः ।
लग्नेशे स्वनवांशस्थे तस्य भुक्तिः शुभावहा ॥ २ ॥
स्वद्वादशांशके लग्ननाथे वा स्वदृकाणगे ।
तस्य भुक्तिः शुभामाहुः यवनाः कालवित्तमाः ॥ ३ ॥

भाषा—लग्नेश अपने नवांश में स्थित हो तो उसकी दशा शुभ करने वाली होती है। लग्नेश अपने द्वादशांश में या अपने द्रेष्काण में हो तो काल के जानने वाले यवन लोग उसकी दशा शुभ दायिनी कहते हैं ॥ २-३ ॥

अथ पुनस्तदेवाह—

स्वत्रिंशांशे तथा मित्रत्रिंशांशेऽवस्थितो यदि ।
तस्य भुक्तिः शुभा प्रोक्ता कालविद्भिर्मुनीश्वरैः ॥ ४ ॥
मित्रक्षेत्रनवांशस्थे मित्रस्य द्विरसांशके ।
तस्य भुक्तिः शुभा प्रोक्ता कालविद्भिर्मुनीश्वरैः ॥ ५ ॥

भाषा—जो ग्रह मित्र के घर, मित्र के नवांश, या मित्र के द्वादशांश में

स्थित हो उसकी दशा शुभ है, यह काल के जानने वाले मुनीश्वर लोग कहते हैं॥५॥

बुद्धिक्षेत्रनवांशस्थे पुत्रस्य द्विरसांशके।
मित्रद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥ ६ ॥

भाषा—पञ्चमभाव में या पञ्चम भाव के नवांश में या पञ्चम भाव के द्वादशांश में या मित्र के द्रेष्काण में गत जो ग्रह उसकी दशा शुभ देने वाली होती है ॥ ६ ॥

तपोराशिनवांशस्थे धर्मस्य द्विरसांशके।
गुरुद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥ ७ ॥

भाषा—नवमराशि के नवांश में, या नवम भाव के द्वादशांश में या बृहस्पति के द्रेष्काण में जो ग्रह हो उसकी दशा शुभ करने वाली होती है ॥७॥

सुखराशिनवांशस्थे वाहनद्विरसांशके।
सुखद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥ ८ ॥

भाषा—चतुर्थराशि के नवांश में या चतुर्थ भाव के द्वादशांश में या सुख भाव के द्रेष्काण में जो ग्रह हो उसकी दशा शुभ होती है ॥ ८ ॥

विलग्ननाथस्थितभांशनाथे मित्रांशके मित्रग्रहेण दृष्टे।
सुहृद्दृकाणस्य नवांशके वा तदास्य भुक्तिः शुभदां वदन्ति ॥९॥

भाषा—लग्नेश जिस राशि में बैठा हो उसके स्वामी के नवांश में या मित्र के नवांश में हो, मित्र ग्रह से देखा जाता हो या मित्र के द्रेष्काण पति के नवांश में जो ग्रह बैठा हो उसकी दशा शुभ होती है ॥ ९ ॥

अथ कष्टप्रदां दशामाह—

अथ वक्ष्ये विशेषेण दशा कष्टप्रदा नृणाम्।
षष्ठाष्टमव्ययेशानां दशा कष्टप्रदायिनी ॥ १० ॥

भाषा—अब इसके बाद कष्ट देने वाली दशा को कहता हूं। षष्ठेश, अष्टमेश, और व्ययेश इनकी दशा कष्ट देने वाली होती हैं ॥ १० ॥

अथ ज्वरप्राप्तिदशामाह—

मारकेशेन षष्ठेशे युक्ते लग्नाधिपे तथा।
तस्य भुक्तौ ज्वरप्राप्तिः प्राहुः कालविदो जनाः॥ ११॥

भाषा—मारकेश से युक्त षष्ठेश की दशा में ज्वर होता है। ऐसा कालज्ञों ने कहा है॥ ११॥

अथाजीर्णजलदोषमरणदशामाह—

सरोगेशः शरीरेशश्चन्द्रषड्वर्गगो यदि।
जलदोषः तस्य भुक्तौ स्यादजीर्णो न संशयः॥ १२॥

भाषा—षष्ठेश से युत लग्नेश चन्द्रमा के षड्वर्ग में गत हो तो उसकी दशा में जल दोष और अजीर्ण होता है। इसमें संशय नहीं॥ १२॥

अथ वातदोषकारकदशामाह—

षष्ठेशयुक्तलग्नेशो बुधषड्वर्गगो यदि।
तस्य भुक्तौ भवेद्वायुः वातो वा देहजाड्यकृत्॥ १३॥

भाषा—षष्ठेश से युक्त लग्नेश बुध के षड्वर्ग में गत हों तो उस की दशा में वायु का प्रकोप होता है, या देह को दुर्बल करने वाला वातरोग होता है॥१३॥

अथ ब्राह्मणेन पीडाकरणदशामाह—

सारिनाथविलग्नेशो गुरुषड्वर्गगो यदि।
तस्य भुक्तौ भवेद्रोगः पीडा वा ब्राह्मणेन तु॥ १४॥

भाषा—अगर षष्ठेश से युत लग्नेश बृहस्पति के षड्वर्ग में हो तो उसकी दशा में रोगी और ब्राह्मणों से पीडा होती है॥ १४॥

अथ स्त्रीगमनेन रोगकरणदशामाह—

सषष्ठेशो विलग्नेशो भृगुषड्वर्गगो यदि।
तस्य भुक्तौ भवेत् पीडा रोगः स्त्रीसङ्गमेन च॥ १५॥

भाषा—अगर षष्ठेश से युत लग्नेश शुक्र के षड्वर्ग में गत हो तो उसकी दशा में पीडा, और स्त्री के सङ्गम से रोग होता है॥ १५॥

अथ सन्निपातकरणदशामाह—

सरोगेशो विलग्नेशः शनिषड्वर्गगो यदि ।
तस्य भुक्तौ भवेद्वातः सन्निपातोऽथवा नृणाम् ॥ १६ ॥

भाषा—अगर षष्ठेश से समन्वित लग्नेश शनि के षड्वर्ग में गत हो तो उसकी दशा में वात रोग और सन्निपात मनुष्यों को होता है ॥ १६ ॥

अथ शस्त्रघातादिकारकदशामाह—

लग्नेशरोगेशकयोर्भवेन्मारकभुक्तिषु ।
तदा ज्ञेयं महत्कष्टं शस्त्रघातादिकं भयम् ॥ १७ ॥

भाषा—लग्नेश और रोगेश की महादशा में मारकेश की अन्तर्दशा में बड़े भारी कष्ट और शस्त्रघातादिक का भय होता है ॥ १७ ॥

अथ रोगकरणदशामाह—

मृतौ स्थिताः सैंहिककेतुमन्दमहीसुताः स्वासविसूचिकाभिः ।
रोगो नराणामथ तस्य भुक्तौ भवेद्यदा मारकसंयुतिश्चेत् ॥ १८ ॥

भाषा—अष्टम भाव में राहु, केतु, शनि और मङ्गल स्थित हों तो उनकी महादशा में मारकेश की अन्तर्दशा में स्वास, विसूचिका रोग होता है ॥ १८ ॥

अथ पुनर्दशाफलप्रस्तावनामाह—

एवं भ्रात्रादिभावानां नायको यत्र संस्थितः ।
तत्तत्षड्वर्गयोगेन तत्तद्भावफलं वदेत् ॥ १९ ॥

भाषा—इसी तरह भ्रात्रादिभावों का स्वामी जिस भाव में स्थित हो उस भावके पतिके षड्वर्ग योग से उस भाव का फल कहना ॥ १९ ॥

अथ मृत्युकृद्दशामाह—

लग्नेशरोगनाथौ च निधनेशेन संयुतौ ।
मारकेशयुतौ क्रूरौ रोगनाथांशगौ यदा ॥ २० ॥
तस्य भुक्तौ विजानीयाद्व्यथा शस्त्रेण वा नृणाम् ।
शुभयोगेन बाधा स्यात्पापयोगेन मृत्युकृत् ॥ २१ ॥

भाषा—पापी लग्नेश और षष्ठेश, अष्टमेश से युत हो, या मारकेश से युत हो, या षष्ठेश के नवांश में हो तो उसके दशा में मनुष्यों को शस्त्र से व्यथा कहना चाहिए। अगर शुभग्रह से युत हो तो कुछ भय नहीं। पापग्रह के योग होने से मृत्यु होती है॥ २०–२१॥

जीवांशजीववर्गेशान्मूलांशान्मूलवर्गतः।
रोगादीन्प्रवदेत्तत्र तेषां भुक्तिवशात्फलम्॥ २२॥

भाषा—स्पष्ट है॥ २२॥

अथ जम्बुकभीतितो वधकरणदशामाह—

विलग्ननाथस्य नवांशनाथो रन्ध्रेशस्वस्थानपदृष्टियुक्तौ।
मेषस्य षड्वर्गगतौ यदा तौ भुक्तौ तयोर्जम्बुकभीतितो वधः॥२३॥

भाषा—लग्नेश का जो नवांश हो उसके स्वामी अष्टमेश और जिस स्थान में बैठा हो उसके जो स्वामी इन दोनों से देखा जाता हो और मेष के षड्वर्ग में गत हो तो इन दोनों के दशामें सियार का भय होता है॥ २३॥

ओजवर्गगतौ तौ चेद्व्याघ्राद्भीतिं वदेन्नृणाम्।
युग्मवर्गगतौ तौ चेत्कपिना नात्र संशयः॥ २४॥

भाषा—अगर वे दोनों विषमराशिके वर्ग में गत हों तो व्याघ्र से भय कहना। यदि समराशि के वर्ग में गत हों तो वानर से भय कहना चाहिए॥ २४॥

अथान्यामपि भयदां दशामाह—

कुलीरवर्गगतौ तौ चेद्रासभाद्भयमादिशेत्।
सिंहवर्गगतौ तौ चेद्भुक्तौ स्याद्व्याघ्रजं भयम्॥ २५॥

भाषा—अगर वे दोनों कर्क के षड्वर्ग में गत हो तो उनके दशा में गदहे से भय होता है। सिंह के वर्ग में गत हों तो उनके दशा में बाघ से भय होता है २५

अलिवर्गगतौ भुक्तौ ययोः सारङ्गजं भयम्।
अथ कार्मुकवर्गस्थौ भुक्तौ स्यादश्वजं भयम्॥ २६॥

भाषा—वृश्चिक के वर्ग में हों तो उनकी दशा में मृगा से भय होता है। धनु के वर्ग में हो तो उन की दशा में घोड़े से भय होता है॥ २६॥

**कन्यावर्गगतौ तौ चेद्भल्लूकाद्भयमादिशेत् ।**
**वणिग्वर्गगतौ तौ चेद्भुक्तौ तेषां मृगाद्भयम् ॥ २७ ॥**

भाषा—कन्या के वर्ग मे गत हों तो भालू से भय होता है । तुला राशि के वर्ग में हों तो उनकी दशा में मृगा से भय होता है ॥ २७ ॥

**मृगवर्गगतौ भुक्तौ तयोः कण्टकजं भयम् ।**
**मीनवर्गगतौ भुक्तौ मेषाश्वग्रहजं भयम् ॥ २८ ॥**

भाषा—मकर के वर्ग में गत हों तो कांटे से भय होता है । अगर वे दोनों मीन के वर्ग में गत हो तो मेढा, घोडा और ग्रह इन से उत्पन्न भय होता है ॥२८॥

**कुम्भवर्गगतौ तौ चेद्गोलाङ्गूलान्महद्भयम् ।**
**एवं देहादिभावानां षड्वर्गगतिभिः फलम् ॥ २९ ॥**

भाषा—कुम्भ के वर्ग मे गत हों तो गोलाङ्गल से भय होता है । इस तरह लग्नादि भावों का षड्वर्ग की गति से फल जानना ॥ २९ ॥

अथ वृषघातान्मरणादां दशामाह—

**लग्नेश्वरो रन्ध्रपतिश्च युक्तौ वृषे वृषांशे वृषभद्दकाणे ।**
**स्थितौ भवेतां यदि वा वृषेण घातात्तयोर्वा मरणं हि भुक्तौ ॥३०॥**

भाषा—लग्नेश और अष्टमेश दोनों एक स्थान स्थित होकर वृष राशि में या उसके नवांश में या उसके द्दकाण में स्थित हों तो उनकी दशा में वृष ( वरद ) से मनुष्य की मृत्यु होती है ॥ ३० ॥

**वृषे युग्मांशगौ तौ चेद् व्याघ्रस्याघातजं भयम् ।**
**वृषे कर्कांशगौ तौ चेद्धनुराद्यैः कल्पयेद्भयम् ॥ ३१ ॥**

भाषा—वे दोनों वृष में स्थित होकर मिथुन के नवांश में हों तो उनकी दशा में बाघ के आघात जन्य भय होता है । अगर वृष राशि में बैठकर कर्कांश में गत हों तो उनकी दशा में धनुष आदि से भय कहना ॥ ३१ ॥

**वृषे कन्यांशगौ तौ चेत् कपिना नात्र संशयः ।**
**वृषे तुलांशगौ तौ चेद् व्याघ्रव्याघाततो मृतिः ॥ ३२ ॥**

भाषा—यदि वृष में बैठकर कन्या के नवांश में हों तो उनकी दशा में वानर के आघात से भय कहना, अगर वृष राशि में बैठकर तुला में हों तो बाघ से भय कहना ॥ ३२ ॥

वृषे कौर्प्यांशगौ तौ चेदश्वात्पीडा प्रजायते।
वृषे मृगांशगौ तौ चेन्माहिषेण मृतिर्भवेत् ॥ ३३ ॥

भाषा—अगर वृष राशि में स्थित होकर धनु के नवांश में हों तो उनकी दशा में घोड़े से भय कहना। यदि वृष राशि में स्थित होकर मकर के नवांश में गत हों तो उनकी दशा में महिष से भय कहना ॥ ३३ ॥

वृषे कुम्भांशगौ तौ चेद् गोलाङ्गूलान्मृतिर्भवेत्।
वृषे मीनांशगौ तौ चेत्तयोर्भुक्तौ मृगाद्भयम् ॥ ३४ ॥

भाषा—यदि वृष राशि में स्थित होकर कुम्भ के नवांश में हों तो उनकी दशा में गोलाङ्गूल रोग से मरण कहना। अगर वृष राशि में स्थित होकर मीन के नवांश में हों तो उनकी दशा में हरिण से भय कहना चाहिए ॥ ३४ ॥

एवं सञ्चिन्त्य मतिमान् पित्रादीनां मृतिं वदेत् ॥ ३४½ ॥

भाषा—इस तरह निश्चय करके पिता माता इत्यादि का मरण कहना चाहिये ३४½

अथ सर्पान्मरणयोगमाह—

शरीरनाथो मरणाधिपेन युक्तो मृगेन्द्रे तु मृगाधिपांशः।
तयोर्विपाके भयमाखुना मृतिं सर्पात्तदा प्राहुरुदारचित्ताः ॥३५॥

भाषा—लग्नेश अष्टमेश से युत सिंह राशि में हो या मकर के स्वामी के नवांश में हो तो उन दोनों ( लग्नेश और अष्टमेश ) की दशा में मूस से भय और सर्प से मरण शास्त्रज्ञ उदार चित्त वाले ज्योतिषियों को कहना चाहिए ॥३५॥

अथ कप्यादिभिर्मरणयोगमाह—

सिंहे कन्यांशगौ तौ चेत्कपिना च तदा मृतिः।
मृगराजे तुलांशस्थौ तयोर्भुक्तौ मृतिं वदेत् ॥ ३६ ॥

भाषा—लग्नेश और अष्टमेश सिंह राशि में होकर कन्या के नवांश में

गत हों तो उसकी दशा में वानर से मरण कहना चाहिए। अगर सिंह में बैठकर तुल के नवांश में गत हों तो उनकी दशा में किसी विशेष कारण से मरण कहना चाहिए ॥ ३६ ॥

अल्यंशगौ मृगेन्द्रे च तयोर्दाये सरीसृपात् ।
चापांशगौ यदा सिंहे तद्वर्षे श्वान्मृतिं वदेत् ॥ ३७ ॥

भाषा—अगर सिंह में बैठकर वृश्चिक के नवांश में हों तो उनकी दशा में साँप से मरण कहना चाहिए। जब वे दोनों सिंह में बैठकर धन के नवांश में गत हों तो उस वर्ष में कुत्ते से मरण कहना चाहिए ॥ ३७ ॥

मृगांशगौ मृगेन्द्रे च तयोर्दाये ज्वरान्मृतिः ।
कुम्भांशकगतौ तौ चेन्मृगराजे नृपाद्भयम् ॥ ३८ ॥

भाषा—सिंह में बैठकर मकर के नवांश में वे दोनों बैठे हों तो उनकी दशा में गदहे से मरण कहना चाहिए। अगर सिंह में बैठा हुआ वे दोनों कुम्भ के नवांश में हों तो उनकी दशा में राजा से भय कहना चाहिए ॥ ३८ ॥

मीनांशकगतौ सिंहे सारङ्गाद्भयमेतयोः ।
सिंहे मेषांशगौ तौ चेद्गोमायोर्भयमादिशेत् ॥ ३९ ॥

भाषा—अगर सिंह में बैठकर मीनांश में गत हों तो सारङ्ग (हाथी) (सारङ्गः पुंसि हरिणे चातके च मतङ्गज इति मेदिनी) से भय कहना चाहिये। अगर सिंह में बैठकर मेष के नवांश में गत हों तो गोमायु (सियार) (स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तका इत्यमरः) से भय कहना चाहिए ॥ ३९ ॥

वृषांशगौ च सूर्यर्क्षे तयोर्दाये शुना मृतिः ।
युग्मांशगौ तौ सिंहे च गोलाङ्गूलाद्भयं तयोः ॥ ४० ॥

भाषा—अगर सूर्य के राशि (सिंह) में बैठकर वे दोनों वृष के नवांश में हो तो उनकी दशा में कुत्ते के काटने से मरण कहना चाहिए। अगर सिंह में बैठकर मिथुन के नवांश में हों तो उनकी दशा में गोलाङ्गूल से भय कहना चाहिए ॥४०॥

कर्कांशगौ तौ सिंहे तु ह्यग्निदाहान्मृतिं गृहे ।

एवं भ्रात्रादिभावानां तत्तद्भुक्तौ मृतिं वदेत् ॥ ४१ ॥

**भाषा**—अगर सिंह में बैठकर कर्क के नवांश में गत हों तो उनकी दशा में घर में अग्निदाह से मरण कहना चाहिए। इस तरह भाई आदि भावेश के दशा में भाई आदि का मरण कहना चाहिए॥ ४१ ॥

अथ पुनर्वाजिकृतमरणयोगमाह—

देहाधिपो मृत्युपसंयुतश्च चापांशगौ कार्मुकराशिगौ चेत्।
दाये तयोर्वाजिकृतं च मृत्युं वदन्ति तत्कालविदो महान्तः॥४२॥

**भाषा**—लग्नेश, अष्टमेश से युत होकर धनु राशि में स्थित होकर धनु के नवांश में गत हों तो उनकी दशा में घोड़े से मरण कहना चाहिये। यह काल को जानने वाले बड़े लोग कहते हैं॥ ४२ ॥

अथ धनुराशिस्थमकरादिनवांशगतयोस्तयोर्दशाफलमाह—

चापे मृगांशगौ तौ चेत्सारङ्गाद्भयमादिशेत्।
हये कुम्भांशगौ तौ चेद्वराहाद्भयमादिशेत् ॥ ४३ ॥

**भाषा**—लग्नेश और अष्टमेश धनुराशि में स्थित होकर मकर के नवांश में हों तो उनकी दशा में सारङ्ग (हाथी) से भय कहना चाहिए। अगर वे दोनों धनु राशि में बैठकर कुम्भ के नवांश में हों तो उसकी दशा में वराह (सूगर) से भय कहना चाहिए॥ ४३ ॥

हये मीनांशगौ तौ चेत्पाके नक्राद्भयं भवेत्।
मेषांशगौ तौ चापे तु तयोर्दाये चतुष्पदात् ॥ ४४ ॥

**भाषा**—अगर धनु राशि में स्थित होकर मीन के नवांश में हों तो उनकी दशा में नक्र (गोह, नाक) से भय कहना चाहिए। अगर धनु राशि में स्थित होकर मेष के नवांश में स्थित हों तो उनकी दशामें चतुष्पद (घोड़ा, बैल, गदहा, हाथी इत्यादि) से भय कहना चाहिए॥ ४४ ॥

हये वृषांशगौ तौ चेद्रासभाद्भयमादिशेत्।
युग्मांशगौ तु चापे तु वानराद्भयमादिशेत् ॥ ४५ ॥

भाषा—अगर धनु में स्थित होकर वृष के नवांश में गत हों तो उनकी दशा में गदहे से भय कहना चाहिए। अगर धनु में स्थित होकर मिथुन के नवांश में बैठा हों तो उन की दशा में बन्दर से भय कहना चाहिए ॥ ४५ ॥

कर्कांशगौ हयाङ्के तु चाखुना भयमेतयोः।
सिंहांशगौ हयाङ्के तु जम्बुकाद्भयमादिशेत् ॥ ४६ ॥

भाषा—अगर धनु राशि में बैठकर कर्क के नवांश में गत हों तो उन की दशा में मूसा से भय कहना चाहिए। अगर धनुराशि में स्थित होकर सिंह के नवांश में गत हों तो उनकी दशा में सियार से भय कहना चाहिए ॥ ४६ ॥

कन्यांशगौ तु चापे तु गोलाङ्गूलाद्भयं वदेत्।
तुलांशगौ हयाङ्के तु उष्ट्रान्मरणमेतयोः ॥ ४७ ॥

भाषा—अगर वे दोनों धनु राशि में स्थित होकर कन्या के नवांश में गत हों तो गोलाङ्गूल से भय कहना चाहिए। अगर धनु में स्थित होकर तुला के नवांश में गत हों तो उनकी दशा में ऊँट से भय कहना चाहिए ॥ ४७ ॥

अल्यंशगौ हयाङ्के तु तयोर्दाये सरीसृपात्।
एवं भ्रात्रादिभावानां फलमाहुर्मनीषिणः ॥ ४८ ॥

भाषा—अगर धनु में स्थित होकर वृश्चिक के नवांश में स्थित हों तो उनकी दशा में सर्प आदि से भय होता है। इस तरह भाई आदि भावेश वश से विद्वानों ने फल कहा है ॥ ४८ ॥

अथ मकरराशिस्थमकरादिनवांशगतयोस्तयोः फलमाह—

विलग्नपो नैधननायकश्च मृगे मृगांशावगतौ च युक्तौ।
प्रीतिर्भवेदाशु तयोर्हि भुक्तौ विवाहहेतुः प्रवदन्ति सन्तः ॥४९॥

भाषा—लग्नेश और अष्टमेश मकर राशि में गत होकर मकर के नवांश में गत हों तो उनकी दशा में शीघ्र विवाह के वास्ते प्रीति होती है, ऐसा विद्वानों ने कहा है ॥ ४६ ॥

कुम्भांशगौ मृगाङ्के च भल्लुकाद्भयमादिशेत्।

षांशगौ मृगाङ्के च सारङ्गाद्भयमेतयोः ॥ ५० ॥

भाषा—अगर मकर राशि में बैठकर कुम्भ के नवांश में हों तो उनकी दशा में भालू से भय कहना चाहिए। अगर मकर राशि में स्थित होकर मीन के नवांश में स्थित हों तो उनकी दशा में सारङ्ग (हाथी) से भय कहना चाहिये ॥ ५० ॥

मेषांशगौ मृगाङ्के तु जलाद्भयविनिर्दिशेत्।
वृषांशगौ मृगास्ये तु वज्राद्भयविनिर्दिशेत् ॥ ५१ ॥

भाषा—अगर मकर में स्थित होकर मेष के नवांश में स्थित हों तो उनकी दशा में जल से भय कहना चाहिए। अगर मकर में स्थित होकर वृष के नवांश में स्थित हों तो वज्र से भय कहना चाहिए ॥ ५१ ॥

युग्मांशगौ मृगाङ्के तु हरिणान्मृतिरेतयोः।
कर्कांशगौ मृगास्ये तौ तयोर्दाये मृतिर्गजात् ॥ ५२ ॥

भाषा—अगर मकर राशि में स्थित होकर मिथुन के नवांश में स्थित हों तो उनकी दशा में हरिण से मरण कहना चाहिए। अगर मकर राशि में स्थित होकर कर्क के नवांश में स्थित हों तो उनकी दशा में हाथी से मरण कहना चाहिए ॥ ५२ ॥

सिंहांशगौ मृगाङ्के तु महापातकजं भयम्।
कन्यांशगौ मृगाङ्के तु वानराद्भयमादिशेत् ॥ ५३ ॥

भाषा—अगर मकर में बैठकर सिंह के नवांश में गत हों तो महापातक का भय कहना चाहिए। अगर मकर में स्थित होकर कन्या के नवांश में स्थित हों तो उनकी दशा में वानर से भय कहना चाहिए ॥ ५३ ॥

तुलांशगौ मृगास्ये तु नकुलान्मृतिरेतयोः।
वृश्चिकांशगौ मृगास्ये तु मार्जारान्मृतिरादिशेत् ॥ ५४ ॥

भाषा—अगर मकर में स्थित होकर तुल के नवांश में स्थित हों तो उनकी दशामें नकुल (सपनौर) से भय कहना चाहिए। अगर मकर राशि में स्थित होकर वृश्चिक के नवांश में स्थित हों तो बिल्ली से भय कहना चाहिए ॥ ५४ ॥

घन्वंशगौ मृगास्ये तु रासभाद्भयमादिशेत्।
एवं निश्चित्य मतिमान् पित्रादीनां फलं वदेत् ॥ ५५ ॥

भाषा—अगर मकर राशिमें स्थित होकर धनु के नवांश में गत्त हों तो गदहे से भय कहना चाहिए। इस तरह निश्चय करके पिता, माता, भाई इत्यादि का फल कहना चाहिए ॥ ५५ ॥

इति जरिसो निवास्यच्युतानन्दशर्मविरचितायां मध्यपाराशरी-
टीकायां पञ्चमः परिच्छेदः।

---

## अथ षष्ठपरिच्छेदः।

अथ ग्रहाणां जातिभेदात्फलकथनार्थप्रस्तावनामाह—

अथ वक्ष्ये खगेन्द्राणां जातिभेदात्फलागमम्।
बालानां बोधनार्थाय सारं संगृह्य शास्त्रतः ॥ १ ॥

भाषा—अब इसके अनन्तर शास्त्रों से सार निकाल कर बालकों के ज्ञान के लिये ग्रहों के जाति भेद से फल कहता हूँ ॥ १ ॥

अथ ग्रहाणां जातिभेदानाह—

विप्रौ देवेज्यभृगुजौ क्षत्रियौ रविभूमिजौ।
वैश्यौ निशाकरबुधौ शनिः शूद्रस्तमोऽन्त्यजः ॥ २ ॥

भाषा—इसका अर्थ लघुपाराशरी में स्पष्ट किया गया है ॥ २ ॥

अथ राशीनां विप्रादिविभागमाह—

मीनादयः क्रमादेते विप्रक्षत्रविशोऽङ्घ्रिजाः।
एतेषां दृष्टियोगाभ्यां फलमाहुर्मनीषिणः ॥ ३ ॥

भाषा—मीन से लेकर क्रम से बारह राशियां ब्राह्मण क्षत्रिय वैश्य शूद्र, होते हैं। जैसे मीन ब्राह्मण, मेष क्षत्री, वृष वैश्य, मिथुन शूद्र, फिर कर्क ब्राह्मण सिंह क्षत्री इत्यादि इन राशियों के दृष्टि और योग से पण्डितों ने फल कहा है ॥३॥

अथ कारकग्रहानाह—

सूर्यो गुरुः कुजः सोमो गुरुर्ज्ञश्च सितः शनिः।
गुरुश्चन्द्रेज्यमन्दाश्च क्रमशो भावकारकाः ॥ ४ ॥

भाषा—रवि, गुरु, मङ्गल, सोम, बृहस्पति, बुध, शुक्र, शनि बृहस्पति, सोम, बृहस्पति, और शनि क्रमसे तन्वादि भाव कारक होते हैं ॥

अथ मतान्तरेण तानेवाह—

पिता रविर्मातृकरः शशाङ्को भ्राता बुधार्की भृगुनन्दनश्च।
भौमः सुतो मित्रग्रहो रविः स्याच्छत्रुग्रहो राहुशनैश्चरौ स्तः ॥५॥

भाषा—रवि पितृकारक, चन्द्रमा मातृकारक, बुध शनि और शुक्र भ्रातृ कारक, मङ्गल पुत्र कारक, रवि मित्र कारक और शत्रुग्रह राहु और शनैश्चर होते हैं ॥ ५ ॥

अथ प्रकारान्तरेण तानेवाह—

पिता रवि र्मातृकरः शशाङ्को भ्राता कुजो मातुलवर्गसौम्यः।
पुत्रो गुरुर्भार्गवकामिनीशो मित्रो रवी राहुशनी च शत्रू ॥ ६ ॥

भाषा—स्पष्ट है ॥ ६ ॥

अथ सहायकग्रहानाह—

शनिभौमौ पितृक्षेत्रे पक्षा जीवज्ञभार्गवाः।
मातुर्भावे तु राजानौ रविचन्द्रमसौ स्मृतौ ॥ ७ ॥
भूसूनुर्नायको ज्ञेयो बुधः सूनुः प्रकीर्तितः।
सचिवौ भृगुजीवौ च दृष्टियोगफलं पृथक् ॥ ८ ॥

भाषा—शनि और मङ्गल पितृ भाव में सहायक होते हैं। मातृभाव में बृहस्पति, बुध और शुक्र सहायक होते हैं। रवि, चन्द्रमा राजा, मङ्गल नायक, बुध कुमार, बृहस्पति और शुक्र मन्त्री हैं। इन सब ग्रहों के दृष्टि योग से अलग। २ फल होता है ॥ ७-८ ॥

अथ स्थानविशेषे पितृकारकमाह—

शनिं च मेषे पितरमाहुः कालविदो जनाः।

ग्रहाणां फलदातृत्वं तत्तत्पाके विनिर्दिशेत् ॥ ९ ॥

भाषा—मेष राशि गत शनि हो तो पितृ कारक होता है। ग्रहों को फल देने की शक्ति उनकी दशा में होती है ॥ ९ ॥

यत्रावेशो यस्य षड्वर्गसंस्थस्तत्तत्पाके द्रव्यलाभो नराणाम्।
यत्तद्द्रव्यं तस्य खेटस्य विन्द्यात्तत्तद्द्रव्यं तस्य पाके वदन्ति ॥१०॥

भाषा—जो आवेश जिस ग्रह के षड्वर्ग में स्थित हो उसके दशामें मनुष्यों को द्रव्य लाभ होता है। किस ग्रह के दशा में किस द्रव्य की प्राप्ति होनी चाहिए, इसके लिये कहते है कि जिस ग्रह का जो द्रव्य है उस द्रव्य की प्राप्ति कहना चाहिए ॥ १० ॥

अथ पाकेशस्य ग्रहाणां नवांशगतत्वेन फलमाह—

पाकेशे भास्करांशस्थे भूपान्मानं विनिर्दिशेत्।
अथवा पितृवर्गाद्वा चन्द्रांशान्मातृवर्गतः ॥ ११ ॥

भाषा—दशा के स्वामी रवि के नवांश में स्थित हो तो राजा से मान होता है, अथवा पिता के सम्बन्धी जनों से मान होता है। चन्द्रमा के नवांश में स्थित हो तो मातृ वर्ग से सम्मान होता ॥ है ११ ॥

कुजांशात्पुत्रवर्गेण नायकाद्वा फलं वदेत्।
सौम्यांशाद् भ्रातृवर्गेण राजपुत्रेण वा फलम् ॥ १२ ॥

भाषा—अगर दशा के स्वामी मङ्गल के नवांश में स्थित हो तो पुत्रवर्ग से अथवा सेना नायक से सम्मान होता है। बुध के नवांश में स्थित हो तो भ्रातृ-वर्ग से अथवा राजपुत्र से सम्मान होता है ॥ १२ ॥

गुर्वंशे मातृवर्गांशत्सचिवाद्वा फलं वदत्।
शुक्रांशान्मातृवर्गेण स्त्रीवर्गाद्वाफलं वदेत् ॥ १३ ॥

भाषा—अगर दशा के स्वामी बृहस्पति के नवांश में स्थित हो तो मातृवर्ग या मन्त्री के द्वारा फल कहना चाहिए। शुक्र के नवांश में स्थित हो तो मातृवर्ग या स्त्री वर्ग के द्वारा फल कहना चाहिए ॥ १३ ॥

**शन्यंशाच्छूद्रवर्गेण प्रेष्यवर्गात्फलं तथा ।**
**राहोः फलं शूद्रवर्गात्केचिदाहुर्मनीषिणः ॥ १४ ॥**

भाषा—अगर दशा के स्वामी शनि के नवांश में स्थित हो तो शूद्र वर्ग से या भृत्य वर्ग से सम्मान होता है । किसी किसी का मत है कि राहु के नवांश में स्थित दशा के स्वामी शूद्र वर्ग से फल को देता है ॥ १४ ॥

**पाके फलं पैतृकं नभवेच्छनिभौमयोः ।**
**पाके जीवज्ञशुक्राणां मातुलाद् भृत्यवर्गतः ॥ १५ ॥**

भाषा—शनि और मङ्गल के दशा में पिता सम्बन्धी फल नहीं होता है । बृहस्पति और शुक्र के दशामें मातुल तथा भृत्यवर्ग से फल नहीं होता है यह किसी का मत है ॥ १५ ॥

**दशाविपाके सुरपूजितस्य ब्रह्मत्वतः ब्राह्मणजातिमूलात् ।**
**अंशानुरूपं फलमाहुरार्याः पादे दशायाश्च वदन्ति धीराः ॥१६॥**

भाषा—बृहस्पति के दशा में ब्रह्मत्व से अथवा ब्राह्मण जाति के कारण अंशानुरूप फल को देते हैं । अर्थात् पहला नवांश ( ३।२०′ ) में रहे तो थोड़ा फल, उस से ज्यादा दूसरा नवांश ( ६।४० ) में एवं ३० अंश से रहे तो पूरा फल देते है ॥ १६ ॥

इति जरिसो निवास्यच्युतानन्दशर्म्मविरचितायां मध्यपारा-
शरीटीकायां षष्ठः परिच्छेदः ।

---

## अथ सप्तमः परिच्छेदः ।

अथ विंशोत्तरीदशाक्रममाह—

**फलानि नक्षत्रदशा प्रकारेण विवृणमहे ।**
**दशा विंशोत्तरी चात्र ग्राह्या नाष्टोत्तरी मता ॥ १ ॥**
**कृत्तिकार्क्षगणस्तत्र यावजन्मर्क्षगं तथा ।**
**नवभिश्च हरेद्भागं शेषं तु स्वदशा भवेत् ॥ २ ॥**

रवौ रसो विधोः पङ्क्तिर्भौमे सप्त विधुन्तुदे ।
अष्टादशः सुराचार्ये षोडशैकोनविंशतिः ॥ ३ ॥
शनौ सप्तदशः सौम्ये केतौ सप्त प्रकीर्तितः ।
नखाः शुक्रस्य विज्ञेया विंशोत्तरशतं मतम् ॥ ४ ॥

भाषा—ये सब श्लोक स्पष्ट हैं ।

अथान्तर्दशानयनमाह—

रव्यादीनां दशा गुण्या त्रिभिः स्वस्वदशाहता ।
घस्राद्यन्तर्दशामानं विंशोत्तरशतात्मके ॥ ५ ॥

भाषा—स्पष्ट है ।

अथ मेषराशौ समुद्भवबालकस्य मारकविचारे विशेषमाह—

मन्दसौम्यसिताः पापाः शुभौ गुरुदिवाकरौ ।
न शुभं योगमात्रेण प्रभवेच्छनिजीवयोः ॥ ६ ॥
परतन्त्रस्य जीवस्य पापकर्मापि निश्चितम् ।
कविः साक्षान्निहन्तास्यान्मारकत्वेन लक्षितः ॥ ७ ॥
मन्दादयो न हन्तारो भवेयुः पापिनो ग्रहाः ।
शुभाशुभफलान्येवं ज्ञातव्यानि क्रियोद्भवे ॥ ८ ॥

भाषा—शनि, बुध और शुक्र पाप ग्रह हैं । बृहस्पति और रवि शुभ ग्रह हैं । अगर बृहस्पति के साथ शनि बैठा हो तो बृहस्पति में भी शुभत्व नहीं रहता है, क्योंकि परतन्त्र होकर बृहस्पति पाप करने वाला होता है, यह निश्चित है । अगर शुक्र मारकेश होतो स्वयं शुक्र मारने वाला होता है । शनि आदि पापी ग्रह मारते नही हैं, जिसको मेषराशि में जन्म है, उसको यह फल होता है ।७-८।

अथ वृषोद्भवे विशेषमाह—

जीवशुक्रेन्दवः पापाः शुभौ शनिशशीसुतौ ।
राजयोगकरः साक्षादेक एव रवेः सुतः ॥ ९ ॥

भाषा—बृहस्पति, शुक्र और चन्द्रमा पाप ग्रह हैं, शनि और बुध शुभग्रह हैं। केवल एक शनि राजयोग कारक होता है ॥ ९ ॥

जीवादयो ग्रहाः पापाः सन्ति मारकलक्षणाः ।
बुधैस्तत्र फलान्येवं ज्ञेयानि वृषजन्मनः ॥ १० ॥

भाषा—जीवादि ग्रह ( बृहस्पति, शुक्र, चन्द्रमा ) मारक ग्रह होते हैं। इस तरह वृष राशि में उत्पन्न बालक का फल पण्डितों को जानना चाहिए ॥ १० ॥

अथ मिथुनोद्भवस्य विशेषतामाह—

भौमजीवारुणाः पापा एक एव कविः शुभः ।
शनैश्चरेण जीवस्य योगो मेषभवो यथा ॥ ११ ॥

भाषा—मङ्गल, बृहस्पति, रवि पाप ग्रह हैं। केवल एक शुक्र शुभ ग्रह है। मेष राशि के लिये जैसे शनि से युत बृहस्पति पापग्रह माना गया है, वैसे यहां पर भी जानना, केवल बृहस्पति पाप नहीं ॥ ११ ॥

नायं शशी निहन्ता स्यात्कारयेत्पापनिष्फलम् ।
ज्ञातव्यानि द्वन्द्वजस्य फलान्येतानि सूरिभिः ॥ १२ ॥

भाषा—चन्द्रमा पाप ग्रह होकर भी कारक नहीं होता है, केवल निष्फल पाप को कराता है। इस तरह मिथुन में उत्पन्न का फल जानना ॥ १२ ॥

अथ कुलीरसम्भवस्य विशेषमाह—

भार्गवेन्दुसुतौ पापौ भूसुताङ्गिरसौ शुभौ ।
एक एव भवेत्साक्षाद् भूसुतो योगकारकः ॥ १३ ॥

भाषा—शुक्र और बुध पाप ग्रह हैं। मङ्गल और बृहस्पति शुभ ग्रह हैं। केवल एव मङ्गल योग कारक होता है ॥ १३ ॥

निहन्ता कविरन्ये तु पापिनो मारकाह्वयाः ।
कुलीरसम्भवस्यैवं फलान्यूह्यानि सूरिभिः ॥ १४ ॥

भाषा—शुक्र मारक होता है। और जो पाप ग्रह हैं, वे भी मारक होते हैं कर्क राशि में उत्पन्न का यह फल जानना ॥ १४ ॥

अथ सिंहोद्भवस्य फलमाह—

रौहिणेयसितौ पापौ कुजजीवौ शुभावहौ ।
प्रभवेद्योगमात्रेण न शुभं कुजशुक्रयोः ॥ १५ ॥

भाषा—रौहिणेय ( बुध ) और शुक्र पाप ग्रह हैं। मङ्गल और बृहस्पति शुभ ग्रह हैं। अगर शुक्र मङ्गल से युत हो तो शुभ कारक नहीं होता है ॥१५॥

घ्नन्ति सौम्यादयः पापा मारकत्वेन लक्षिताः ।
एवं फलानि वेद्यानि सिंहजस्य मनीषिभिः ॥ १६ ॥

भाषा—अगर मारक बुधादि पाप ग्रह हों तो मारक होते हैं। सिंह राशि में उत्पन्न बालक का फल पण्डितों को इस तरह जानना चाहिए ॥ १६ ॥

अथ कन्योद्भवस्य फलान्याह—

कुजजीवेन्दवः पापा एक एव भृगुः शुभः ।
भार्गवेन्दुसुतावेव भवेतां योगकारकौ ॥ १७ ॥

भाषा—मङ्गल, बृहस्पति और चन्द्रमा पाप ग्रह हैं। केवल एक शुक्र शुभ ग्रह है। शुक्र और बुध निश्चय करके योग कारक होते हैं ॥ १७ ॥

न हन्ता कविरन्ये तु मारकास्ते कुजादयः ।
प्रतीक्ष्येत फलान्येवं कन्याराशिभवस्य हि ॥ १८ ॥

भाषा—शुक्र मारक नहीं होता है। अन्य कुजादि पाप ग्रह मारक होते हैं। कन्या राशि में उत्पन्न बालक का फल की इस तरह प्रतीक्षा करना चाहिए॥१८॥

अथ तुलोद्भवस्य फलान्याह—

जीवार्कभूसुताः पापाः शनैश्चरबुधौ शुभौ ।
भवेतां राजयोगस्य कारकौ चन्द्रचन्द्रजौ ॥ १९ ॥

भाषा—बृहस्पति, रवि और मङ्गल पाप ग्रह हैं। शनि और बुध शुभ हैं। न्द्रमा और बुध राजयोग कारक होते हैं ॥ १९ ॥

कुजो न हन्ता जीवाद्याः परे मारकलक्षणाः ।
निहन्तारः फलान्येवं ज्ञातव्यानि तुलाभुवः ॥ २० ॥

भाषा—मङ्गल मारक नहीं होते हैं। और जीवादि पापग्रह मारक होते हैं। इस तरह तुला राशि में उत्पन्न बालक का फल जानना ॥ २० ॥

अथ वृश्चिकजन्मनः फलमाह—

सौम्यभौमसिताः पापाः शुभौ गुरुनिशाकरौ।
सूर्यचन्द्रमसावेव भवेतां योगकारकौ ॥ २१ ॥

भाषा—बुध, मङ्गल और शुक्र पाप ग्रह हैं, बृहस्पति और चन्द्रमा शुभ ग्रह हैं। और सूर्य, चन्द्रमा राजयोगकारक होते हैं ॥ २१ ॥

जीवो न हन्ता सौम्याद्याः परे मारकलक्षणाः।
तत्तत्फलानि विज्ञेयान्येवं वृश्चिकजन्मनः ॥ २२ ॥

भाषा—बृहस्पति मारक नहीं होता, अन्य सौम्यादि पापग्रह मारक होते हैं। इस तरह वृश्चिकोत्पन्न बालक का फल जानना ॥ २२ ॥

अथ धनुर्जन्यफलमाह—

एक एव कविः पापः शुभौ भौमदिवाकरौ।
योगौ भास्करसौम्याभ्यां न तु हन्तांशुमत्सुतः ॥ २३ ॥

भाषा—केवल एक शुक्र पाप ग्रह है। मङ्गल और सूर्य शुभ हैं। सूर्य और बुध राजयोग कारक होते हैं। अंशुमत्सुत ( शनि ) मारक नहीं होता ॥ २३ ॥

घ्नन्ति शुक्रादयः पापा मारकत्वेन लक्षिताः।
ज्ञातव्यानि फलान्येवं धनुषश्च मनीषिभिः ॥ २४ ॥

भाषा—शुक्र आदि के पाप ग्रह मारक होते हैं, इस तरह धनु का फल पण्डितों को जानना चाहिए ॥ २४ ॥

कुजजीवेन्दवः पापाः शुभौ भार्गवचन्द्रजौ।
स्वयं चैव न हन्ता स्यान्मन्दो भौमादयः परे ॥ २५ ॥
तल्लक्षणा निहन्तारः कविरेकः सुयोगकृत्।
ज्ञातव्यानि फलान्येवं बुधैश्च मृगजन्मनः ॥ २६ ॥

भाषा—मङ्गल, गुरु और चन्द्रमा पाप ग्रह हैं। शुक्र और बुध शुभ ग्रह

हैं। स्व शनि मारक नहीं होता। अन्य भौमादि पाप ग्रह तल्लक्षण (मारक के लक्षण) होने से मारक होते हैं। केवल एक शुक्र योग कारक होता है। इस तरह मकर राशि का फल जानना ॥ २५-२६ ॥

अथ कुम्भजन्मनः फलमाह—

जीवचन्द्रकुजाः पापा एको दैत्यगुरुः शुभः।
राजयोगकरो भौमः कविरेव बृहस्पतिः ॥ २७ ॥
न हन्ता घ्नन्ति भौमाद्या मारकत्वेन लक्षिताः।
एवमेव फलान्यूह्यान्येवं हि घटजन्मनः ॥ २८ ॥

भाषा—बृहस्पति, चन्द्रमा और मङ्गल पापग्रह हैं। केवल एक दैत्यगुरु (शुक्र) शुभ है। मङ्गल और शुक्र राजयोग कारक हैं। बृहस्पति मारक नहीं होता, भौमादि पाप ग्रह (मङ्गल, चन्द्रमा, बृहस्पति) मारकेश होने से मारक होते हैं। इस तरह कुम्भ राशि का फल जानना चाहिए ॥ २७-२८ ॥

अथ मीनजन्मनः फलमाह—

मन्दशुक्रांशुमत्सौम्याः पापा भौमविधू शुभौ।
महीसुतगुरू योगकारकौ नैव भूसुतः ॥ २९ ॥
मारको मारकाभिख्यौ मन्दज्ञौ घ्नन्ति पापिनौ।
इत्यूह्यानि बुधैस्तत्र फलानि झषजन्मनः ॥ ३० ॥

भाषा—शनि, शुक्र, रवि और बुध पापग्रह हैं। मङ्गल और चन्द्रमा शुभ ग्रह हैं। मङ्गल और बृहस्पति योगकारक होते हैं। मारक लक्षण लक्षित भी मङ्गल मारक नहीं होता। पापी शनि और बुध मारक लक्षण लक्षित होने से मारक होते हैं। इस तरह मीन का फल जानना ॥ २९-३० ॥

अथ मारकविचारेऽस्य शास्त्रस्य विशेषतामाह—

एतच्छास्त्रानुसारेण मारकान्निर्दिशेद् बुधः।
चन्द्रसूर्यौ विना सर्वे मारकाः परिकीर्तिताः ॥ ३१ ॥
स्वदशायां स्वभुक्तौ च नराणां निधनं नहि।

क्वचिद्ध भुक्तौ समिच्छन्ति स्वभुक्तौ न कदाचन ॥ ३२ ॥

भाषा—पण्डित को इस शास्त्र के अनुसार मारक का निश्चय करना चाहिए। चन्द्रमा और मङ्गल को छोड़ कर सब मारक होते हैं। मारक अपनी दशा में नहीं मारता। किन्तु अपनी दशा में किसी अन्य के अन्तर्दशा में मारता है। अपनी अन्तर्दशा में नहीं ॥ ३१-३२ ॥

इति जरिसो निवास्यच्युतानन्दशर्म्मविरचितायां मध्यपाराशरीटीकायां सप्तमः परिच्छेदः।

---

## अथाष्टमः परिच्छेदः।

अथ लग्नात्किं विचिन्त्यमित्याह—

लग्नाच्चिन्त्यं मूर्त्तिकीर्तिसाङ्गोपाङ्गनिरूपणम्।
स्थितिस्वरूपसम्पत्तिर्जन्मलग्नगतं फलम् ॥ १ ॥

भाषा—लग्न से रङ्ग का साङ्गोपाङ्ग निरूपण, कीर्ति का साङ्गोपाङ्ग निरूपण, स्थिति, स्वरूप, सम्पत्ति और जन्मलग्नगत फल का विचार करना चाहिए ॥१॥

अथ धनस्थानात्किं विचिन्त्यमित्याह—

धनं सुखं च भुक्तिं च सत्यं च बहुवक्तृताम्।
सव्यनेत्राल्पहारश्च धनस्थानाद्विचिन्तयेत् ॥ २ ॥

भाषा—धन, सुख, भोगविशेष, सत्य, बहुत बोलना, दक्षिण नेत्रादि का दुसरे स्थान से विचार करना चाहिए ॥ २ ॥

अथ भ्रातृस्थाने विचारणीयमाह—

भ्रातृकण्ठौ विक्रमश्च क्षुधाभरणपात्रताम्।
भ्रातृस्थानफलं सर्वं तत्तन्नाम फलं दिशेत् ॥ ३ ॥

भाषा—तीसरे से भाई, कण्ठ, विक्रम, क्षुधा, भूषण, पात्रता, भ्रातृस्थान जन्य सब फल का विचार करना चाहिए ॥ ३ ॥

अथ बन्धुस्थाने विचारणीयमाह—

बन्धुवाहनमातुश्च सिंहासनसुखगृहाः ।
मित्रबाहुरिदं सर्वं बन्धुस्थानाद्विचिन्तयेत् ॥ ४ ॥

भाषा—बन्धु, बाहन, माता, राज्यसुख, गृह, मित्र, बाहु ये सब चौथे भाव से विचारना चाहिए ॥ ४ ॥

अथ पञ्चमभावाद्विचारणीयमाह—

पुत्रो बुद्धिश्च मित्रं च देवताभक्तिरुत्तमा ।
हृदयं मातुलश्चैव सुतस्थानाद्विचिन्तयेत् ॥ ५ ॥

भाषा—पञ्चमस्थान से पुत्र, बुद्धि, मित्र, देवता भक्ति, हृदय, मातुल इनका विचार करना चाहिए ॥ ५ ॥

अथ षष्ठाद्विचारणीयमाह—

रिपुज्ञातिबलं रोगमुदरं शत्रुरेव च ।
षष्ठस्थानमिदं नाम तत्तन्नामफलं दिशेत् ॥ ६ ॥

भाषा—रिपु, ज्ञाति, बल, रोग, उदर, शत्रु, ये सब षष्ठस्थान के नाम है इसलिये इन सबका इससे चिन्तना करना चाहिये ॥ ६ ॥

अथ सप्तमादष्टमाच्च विचारणीयमाह—

कलत्रभोगश्छत्रं च दन्तनाभिश्च रोगवान् ।
गुदं सङ्करके चैव आयुस्थानाद्विचिन्तयेत् ॥ ७ ॥

भाषा—सप्तम से स्त्रीसम्बन्धि भोग, छत्र, दन्त, नाभी, रोग, इन सबोंका विचार करना चाहिये । गुह्यस्थान, जीवन, मरण इन का अष्टम भाव से विचार करना चाहिए ॥ ७ ॥

अथ नवमस्थानाद्दशमाच्चविचारणीयमाह—

भाग्यं तीर्थं च धर्मं च पितृस्थानमिति क्रमात् ।
मानराज्यत्यागकीर्तिः कर्मव्यापारमेव च ॥ ८ ॥

भाषा—नवमभाव से भाग्य, तीर्थ, धर्म, पिता, गुरु इत्यादि का विचार

करना। मान, राज्य, दान, कीर्ति, कर्म, व्यापार इत्यादि का दशम भाव से विचार करना॥ ८॥

अथ लाभाद्वादशाच्च विचारणीयमाह—

लाभं च ज्येष्ठभ्रातारं कर्णजङ्घमिति क्रमात्।
रिष्फव्ययं पितृधनं वादयोषादिनामच॥ ९॥

भाषा—लाभ, ज्येष्ठ भाई, कर्ण जङ्घादि का लाभस्थान से विचार करना। व्ययस्थान से व्यय, पितृधन, वादविवाद, योषादि का नाम, इनका विचार करना॥९॥

अथ सजलनिर्जलराशीनाह—

कुंभकर्कटगोमीनमकरालितुलाधराः।
सजला राशयः प्रोक्ता निर्जलाः शेषराशयः॥१०॥

भाषा—कुंभ, कर्क, वृष, मीन, मकर, वृश्चिक, और तुल ये सजल राशि हैं। शेष (मेष, मिथुन, सिंह कन्या, धन) ये सब निर्जल हैं॥ १०॥

अथ ग्रहविभागमाह—

रविभौमार्कजाः शुष्काः सजलौ चन्द्रभार्गवौ।
बुधवाचस्पती ज्ञेयौ सजलौ जलराशिगौ॥ ११॥

भाषा—रवि, मङ्गल, शनि ये शुष्क (अग्निग्रह) हैं। चन्द्रमा और शुक्र सजलग्रह है। बुध और गुरु जल राशि में होने से सजल होते हैं॥ ११॥

सुविदित "दरभङ्गा" ख्ये प्रान्ते पत्रालये "बहेड़ा" ख्ये।
"जरिसो" नाम्ना ख्यातं नगरं भूदेवावलिसंवलितम्॥
अकरोत्तत्र निवासी श्रीमद् "बलदेव" शर्म्मणस्तनयः।
"श्री अच्युतादिनन्दः" पाराशर्य्यस्टीकनं हिन्द्याम्॥

समाप्तेयं मध्यमा पाराशरी।

---

Printed at the Vidya Vilas Press, Banares. City.

# परिचयः

आसीद्विदेहविषयेऽखिललोकदक्षः ।
श्रीकश्यपान्वयभवोऽतिविशुद्धकर्मा ।
झोपाह्व"देवन" इति प्रथितो हि नाम्ना ।
भूमौ समैर्नरवरैरनिशं सुपूज्यः ॥ १ ॥
पुत्रेष्वनेकविधिकौशलगुम्फितेषु
तस्य त्रयः समभवन्सुतरां सुयोग्याः ।
तत्रानुजो निखिललोकनितान्तशान्तः
स्वच्छाशयो द्विजवरो "जयदत्त" संज्ञः ॥ २ ॥
तस्याभवत्सुतकदम्बकसर्वयोग्य-
श्चास्मत्पितामहपिता किल "भाइनाथः" ।
जातो विशुद्धगुणवर्यपितामहो मे
"गोसाँइ" संज्ञ इह शान्तगुणैकमूर्त्तिः ॥ ३ ॥
तस्याभवन्निखिललोकहितैकदक्षाः
पुत्रा विवेकनिपुणा ह्यतिशान्तकान्ताः ।
पञ्चानवद्यगुणसंवलितास्त्वमीषु
सर्वानुजो ममपिता "बलदेव" नामा ॥ ४ ॥
भूमौ सुरेन्द्र इव सर्वनरैः प्रतीक्ष्यः
शान्तः सदा प्रचुरदैवविदामग्रगण्यः ।
कारुण्यपूतहृदयः परिपन्थिहीनः
आमर्षलोभरहितोऽतिविनीतवेषः ॥ ५ ॥
तत्तनया विविधधियः सप्तमिता लोकलोचनानन्दाः ।
ज्येष्ठस्तेषु सुहृदयः श्रीमान् "रघुवंश" नामास्ति ॥ ६ ॥
सर्वं गृहभारं ह्या–दायामुष्मै पिता गतः स्वर्गम् ।
वसुपञ्चनागचन्द्रे ( १८५८ ) शाकेऽङ्कतिथौ नभः शुचौ चन्द्रे ॥ ७ ॥
तस्यानुजोऽल्पधिषणोऽयमच्युतानन्दनामाहम् ।
नेत्रारिनागचन्द्रे ( १८६२ ) शाकेऽङ्कतिथौ मधोः शुचौ चन्द्रे ॥ ८ ॥
बोधं गुरुभ्य आप्य "श्रीगेनालाल" संज्ञभ्यः ।
काश्यामकार्षमस्य ग्रन्थस्य मनोहरीं टीकाम् ॥ ९ ॥

## जातकपारिजातः ( सचित्रः )

**सोपपत्तिक-'सुधाशालिनी' 'विमला' संस्कृत-हिन्दीटीकाद्वयोपेतः।**

हमारे योग्य सम्पादक ने उपर्युक्त टीकाओं से ग्रन्थ के परीक्षोपयोगी सभी विषयों को स्पष्ट करके अपनी अद्भुत कल्पना द्वारा नवीन २ उपपत्ति संकेत तथा नाना प्रकार के चक्र एवं चित्र देकर सभी मार्मिक गूढ विषयों को स्पष्ट कर दिया है। परीक्षा में यही संस्करण विशेष रूप से लाभदायक सिद्ध हुआ है।

अभिनव द्वितीय सुलभ संस्करण १०) उत्तम संस्करण १२)

## मुहूर्तचिन्तामणिः—मणिप्रभा टीका

**पीयूषधारा तथा प्रमिताक्षरा के अपेक्षित अंशों से परिपूर्ण-मणिप्रभा विस्तृत-भाषाटीका , वक्तव्य ( नोट्स ) सहितः**

इस संस्करण में ग्रन्थ के प्रत्येक मर्मस्थलों को शुद्ध हिन्दी भाषा में इस तरह व्यक्त किया गया है कि जिसे देख कर सर्व साधारण भी ग्रन्थ के अभिप्राय को भली भांति समझ सकेंगे। प्रत्येक श्लोकों के अन्वय के बाद शुद्ध हिन्दी में उनके अर्थ, उपपत्ति, उदाहरण तथा और भी विशेष उल्लेख किये गये हैं। यह कहना अत्युक्ति नहीं होगा कि इस संस्करणमें 'पीयूषधारा' और 'प्रमिताक्षरा' के अपेक्षित आवश्यक अंशोंका भी यथा स्थान सन्निवेश कर दिया गया है। [ ह॰ १८५ ] ३)

## मुहूर्तमार्तण्डः—मार्तण्डप्रकाशिका टीका

**सान्वय-मार्तण्डप्रकाशिका-व्याख्योपपत्ति-भाषोदाहरण विभूषितः।**

यह अति सरल परीक्षोपयोगी संस्करण विद्यार्थियों के लिये प्रकाशित किया गया है। जिन विषयों को पढ़ लेने पर भी छात्र यथार्थ ज्ञान से विमुख रहते थे वे सब स्थल व्याख्या उदाहरण आदि से स्पष्ट कर दिए गए हैं जो आज तक किसी भी अन्य संस्करण में नहीं छपे हैं। [ का॰ १४६ ] ३)

## वास्तुरत्नावली

**सोदाहरण-सुबोधिनी संस्कृत हिन्दी टीकाद्वय सहिता।**

यह संस्करण परीक्षार्थी विद्यार्थियों के लाभ के हेतु सरल संस्कृत हिन्दी टीका तथा उदाहरणों से सुशोभित कर प्रकाशित किया गया है। मेरा दृढ विश्वास है कि इस टीका को एकबार भी अवलोकन करने से विद्यार्थी परीक्षा में उत्तम रूप से सफलता प्राप्त कर सकते हैं २॥)

---